# शुक्लयजुर्वेदीय-वाजसनेय
# पद पाठ समेत
# काण्व-संहिता
## अध्याय : २१-४०

# Śukla Yajur Veda
# Kānva Śākha Samhitā and Pada Pāṭha
## Volume 2 Chapters 21 to 40



Author
**K Suresh**
Qualified in: M.Com, CA, CWA, CS, PGDFTM, DHA - Astrology, PhD in Vedas.
Learning: The Veda(s)

# शुक्लयजुर्वेदीय-वाजसनेय

# पद पाठ समेत

# काण्व-संहिता

## अध्याय : २१-४०

**Śukla Yajur Veda**

# Kānva Śākha Samhitā and Pada Pātha

**Volume 2**

**Chapters 21 to 40**

**By**

**K Suresh**

Qualified in: M.Com, CA, CWA, CS, PGDFTM, DHA - Astrology, PhD in Vedas.
Learning: The Veda(s)

**Publisher:**

**The Ghanapati**
**G2 Kings Manor**
**35/62, 4th Trust Cross Street,**
**Mandavelipakkam**
**Chennai 600 028 Phone: +91-97397 81284**
**Author: suresh@ghanapati.com**
**Enquiries: support@ ghanapati.com**
**Web Site: www.ghanapati.com**

THE GHANAPATI

First published in Oct 2021 by The Ghanapati

Published by The Ghanapati
Chennai, Tamil Nadu, India

Śukla Yajur Veda Kānva Śākha Samhitā and Pada Pāṭha. Volume 2



ISBN: 978-81-948959-8-5

The Ghanapati
G2 King Manor 35/62
4th Trust Cross Street
Mandavelipakkam
Chennai - 600028

Web: www.ghanapati.com
Enquiries: support@ghanapati.com

Printed by: Jwalamukhi Mudranalaya Pvt Ltd, Basvanagudi, Bengaluru, Karnataka - 560004

# Kānva Śākha Samhitā with full Pada Pātha

## Index

## About Sri. K Suresh, the Author

He is a native of Varagur Village in Tanjore District, Tamil Nadu, India. Born on 28th February 1966 as the 2nd Son of Late Sri. P Krishnamoorthy Iyer and Smt. K Meenakshi Ammal. He had his schooling in Sir. P S Sivaswamy Iyer Hr Secondary School. Tirukattupalli. Tanjore. He had his B.Com degree from Vivekananda College, Mylapore, Chennai with a 1st Class and secured the **III Rank** in his Post Gradution in Commerce **(M.Com)** from the University of Madras from A.M Jain College, Meenambakkam, Chennai. He is an **All India Rank Holder in CA, CWA and CS** from India's Premier Institutes like Chartered, Cost & Works, and Company Secretaries of India. He also received his **Post Graduate Diploma in Foreign Trade Management (PGDFTM)** from the Indian Institute of Export Management, Calcutta. In addition to this, he also got his **Diploma in Hindu Astrology (DHA)** from Kadalangudi Institute of Astrology, Chennai. He received Business Management Training in INSEAD, The European Institute of Business Administration, Fontainebleau, France and in US GAAP and SEC reporting at Hongkong by Price Waterhouse, Belgium.

**Interest in the Vedas:**

**A) Ṛig Veda:** Learning under Sri. B V Surya Narayana Bhat Ghanapatigal, Mylapore and Sri. Govind Prakash Bhat Ghanapatigal, Bangalore.

**B) Kṛishṇa Yajur Veda:** Learnt under Shri. V G Subramanya Ghanapatigal, Mylapore, Chennai and Sri. Ananthanarayana Somayaji, Musiri.

**C) Śukla Yajur Veda:** Learnt under Shri. Parasurama Ghanapatigal, Ambattur, Chennai.

**D) Atharva Veda:** Learning under Shri. Mahesh Ghanapatigal and Sri. Raghavendra Ghanapatigal.

**Other Achievements:**

1. Published an article on "Export House Status" in "Chartered Accountant" Magazine.
2. Held Senior Management positions in Indian and Foreign Companies.
3. Selected as one of the "Top 100 CFOs in India" by CFO Institute in March 2015.
4. Conferred the '100 Most Influential CFO's of India' title by the Chartered Institute of Management Accounts, London in June 2016.
5. Received the "Asia CFO Excellence Award" in Construction & Real Estate Sector from CMO Asia in August 2016.
6. Published a research article titled "More Accurate Prediction Using Ashtavarga" in World Famous "The Astrological Magazine" by Dr B V Raman, Bangalore.
7. Demonstrated a new method of reciting Ghana Pāṭha from more than one Veda Śākha simultaneously to highlight the differences of Swara, Word (Padam) and place of occurrences in the same text, similar to Jugal Bandhi in Music, named Suresha Paddhati.
8. Written and published many books in Veda Ghana Pāṭha from Ṛig, Kṛishṇa Yajur and Śukla Yajur Veda, first of its kind in the world.
9. Recited and published many Audio CDs and DVD in Veda Ghana Pāṭha. Running a successful Vedas related YouTube Channel called "The Ghanapati"
10. Received Doctorate (PhD) in the Vedas, from Vedic Wellness University, Florida, USA in July 2019.
11. Honoured by Vice President of India Sri. Venkaiah Naidu during August 2018, for excellence and achievement in academic, professional, and Vedic fields.

**Vedic Works by Sri. K Suresh:**

**Books:**

1. Sri Rudra Ghana Pāṭha (Sanskṛit)
2. Sri Rudra Ghana Pāṭha (Tamil)
3. Chamaka Ghana Pāṭha (Sanskṛit)
4. Chamaka Ghana Pāṭha (Tamil)
5. Yajur Veda Āśīrwāda Ghana Pāṭha Vol – 1 (Sanskṛit)
6. Yajur Veda Āśīrwāda Ghana Pāṭha Vol – 2 (Sanskṛit)
7. Yajur Veda Āśīrwāda Ghana Pāṭha Vol – 3 (Sanskṛit)
8. Ṛig Veda Āśīrwāda Ghana Pāṭha Vol – 1 (Sanskṛit)
9. Ṛig Veda Āśīrwāda Ghana Pāṭha Vol – 2 (Sanskṛit)
10. Ṛig Veda Āśīrwāda Ghana Pāṭha Vol – 3 (Sanskṛit)
11. Pancha Rudra Ghana Pāṭha (Sanskṛit)
12. Sri Rudra Krama Pāṭha (Sanskṛit & Kannada)
13. Śukla Yajur Veda Jatā Pāṭha Vol – 1 (Sanskṛit)
14. Śukla Yajur Veda Jatā Pāṭha Vol – 2 (Sanskṛit)
15. Apratiratha Mantra Ghana Pāṭha (Sanskṛit & English)
16. Jeemootasyeva Ghana Pāṭha (Sanskṛit & English)
17. Vishvajite Ghana Pāṭha (Sanskṛit & English)
18. Aano Bhadra Ghana Pāṭha (Sanskṛit & English)
19. Special Suktas from Ṛig Veda (Sanskṛit)
20. Śukla Yajur Veda Jatā Pāṭha Vol – 3 (Sanskṛit)
21. Śukla Yajur Veda Jatā Pāṭha Vol – 4 (Sanskṛit)
22. Śukla Yajur Veda Samhitā and Full Pada Pāṭha (Sanskṛit)
23. A Brief History of Vedas (English)

**Audio:**

1. Sri Rudra Ghanam
2. Chamaka Ghanam
3. Yajur Veda Āśīrwāda (Blessing) Ghana Pāṭha Vol – 1
4. Sri Rudram, Chamakam, Suktams and Mantra Pushpam
5. Unbeatable - Apratiratha Mantra Ghana Pāṭha
6. Thundercloud - Jeemootasyeva Ghana Pāṭha
7. The Treasure - Vishvajite Ghana Pāṭha
8. Wisdom Bliss - Aano Bhadra Ghana Pāṭha
9. Suresha Paddhati – Stress Reliever – Sri Rudra Pancha Rudra Vedic Jugalbandhi (Part-1)

**DVD:**

1. Suresha Paddhati Part-2 (Ṛig Yajur Sandhya vandana Vedic Jugalbandhi)

**Books to be Published:**

1. Śukla Yajur Veda Pada Pāṭha (Sanskṛit)
2. Ṛig Veda Āśīrwāda Ghana Pāṭha Vol – 4 (Sanskṛit) (Asya Vāmasya Ghana Pāṭha)
3. Ṛig Veda Āśīrwāda Ghana Pāṭha Vol – 5 (Sanskṛit)
4. Yajur Veda Āśīrwāda Ghana Pāṭha Vol – 4 (Sanskṛit)
5. Yajur Veda Āśīrwāda Ghana Pāṭha Vol – 5 (Sanskṛit)
6. Ashta Vikriti of Pancha Rudram (Sanskṛit)
7. Śukla Yajur Veda Krama Pāṭha (Sanskṛit)

**Audio to be Released:**

1. Yajur Veda Āśīrwāda Ghana Pāṭha Vol – 2
2. Yajur Veda Āśīrwāda Ghana Pāṭha Vol – 3
3. Taittiriya Upanishats
4. Remedy & Peace (Shanti Mantras)

We request you to purchase our Vedic publications and audios for your use and gift it to your dear ones.

In case you want to contribute financially for more Vedic content in future, you may do so by visiting www.ghanapati.com or write a mail to: support@ghanapati.com

# ।। अथ तृतीयो दशक : ।।३।।

## ।। एकविंशोऽध्याय : ।।

| | |
|---|---|
| 21.1.a | स्वाद्वी न्त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन । |
| 21.1.b | मधुमतीम् मधुमता सृजामि सꣳसोमेन । |
| 21.1.c | सोमोऽस्यश्विभ्याम् पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णेपच्यस्व।।१।। |
| 21.2.a | परीतो षिञ्चता सुतꣳ सोमो य उत्तमꣳ हवि : । |
| 21.2.b | दधन्वा यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभि : ।।२।। |
| 21.3.a | वायो : पूत : पवित्रेण प्राङ्क्सोमो अतिद्रुत : । |
| 21.3.b | इन्द्रस्य युज्य : सखा । |
| 21.3.c | वायो : पूत : पवित्रेण प्रत्यङ्क्सोमो अतिद्रुत : । |
| 21.3.d | इन्द्रस्य युज्य : सखा ।।३।। |
| 21.4.a | पुनाति ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । |
| 21.4.b | वारेण शश्वता तना ।।४।। |
| 21.5.a | ब्रह्म क्षत्रं पवते तेज इन्द्रियꣳ सुरया सोम : सुत आसुतो मदाय । |
| 21.5.b | शुक्रेण देव देवता : पिपृग्धि रसेनान्नँ य्यजमानाय धेहि । |
| 21.5.c | कुविदङ्ग यवमन्तो यवञ् चिद्यथा दान्त्यनुपूर्वँ वियूय । |
| 21.5.d | इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्ति न्न जग्मु : । |

# अथ तृतीयदशक :

## अथ एकविंशोऽध्याय :

ओं स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रेण । अमृताम् । अमृतेन ✱। मधुमती मिति मधु = मतीम् । मधुमतेति मधु = मता । सृजामि । सम् । सोमेन ✱। सोम : । असि । अश्विभ्या मित्यश्वि = भ्याम् । पच्यस्व । सरस्वत्यै । पच्यस्व । इन्द्राय । सुत्राम्ण इति सु = त्राम्णे । पच्यस्व ✱॥१॥ परि । इत : । सिञ्चत । सुतम् । सोम : । य : । उत्तममित्युत् = तमम् । हवि : ✱। दधन्वान् । य : । नर्य : । अप्स्वित्यप् = सु । अन्त : । आ । (सुषाव । सुसावेति सुसाव )। सोमम् । अद्रिभि रित्यद्रि = भि : ✱॥२॥ वायो : । पूत : । पवित्रेण । प्राङ् । सोम : । अतिद्रुत इत्यति = द्रुत : ✱। इन्द्रस्य । युज्य : । [redacted] । [redacted] : । पूत : । पवित्रेण । प्रत्यङ् । सोम : । अतिद्रुत इत्यति = द्रुत : ✱। इन्द्रस्य । युज्य : । सखा ✱॥३॥ पुनाति । ते । परिस्रुत मिति परि = स्रुतम् । सोमम् । सूर्यस्य । दुहिता ✱। वारेण । शश्वता । तना ✱॥४॥ ब्रह्म । क्षत्रम् । पवते । तेज : । इन्द्रियम् । सुरया । सोम : । सुत : । आसुत इत्या = सुत : । मदाय ✱। शुक्रेण । देव । देवता: । पिपृग्धि । रसेन । अन्नम् । यजमानाय । धेहि ✱। कुवित् । अङ्ग । यवमन्त इति यव = मन्त : । यवम् । चित् । यथा । [redacted] । अनुपूर्व मित्यनु = पूर्वम् । वियूयेति वि = यूय ✱। इहेहे तीह = इह । [redacted] । कृणुहि । भोजनानि । ये । बर्हिष : । नमउक्ति मिति नम : = [redacted] । [redacted] । जग्मु : ✱।

# ।। अथ तृतीयो दशक : ।।३।।

## ।। एकविंशोऽध्याय : ।।

| | |
|---|---|
| 21.1.a | स्वाद्वी न्त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन । |
| 21.1.b | मधुमतीम् मधुमता सृजामि सꣳसोमेन । |
| 21.1.c | सोमोऽस्यश्विभ्याम् पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णेपच्यस्व।।१।। |
| 21.2.a | परीतो षिञ्चता सुतꣳ सोमो य उत्तमꣳ हवि : । |
| 21.2.b | दधन्वा यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभि : ।।२।। |
| 21.3.a | वायो : पूत : पवित्रेण प्राङ्क्सोमो अतिद्रुत : । |
| 21.3.b | इन्द्रस्य युज्य : सखा । |
| 21.3.c | वायो : पूत : पवित्रेण प्रत्यङ्क्सोमो अतिद्रुत : । |
| 21.3.d | इन्द्रस्य युज्य : सखा ।।३।। |
| 21.4.a | पुनाति ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । |
| 21.4.b | वारेण शश्वता तना ।।४।। |
| 21.5.a | ब्रह्म क्षत्रं पवते तेज इन्द्रियꣳ सुरया सोम : सुत आसुतो मदाय । |
| 21.5.b | शुक्रेण देव देवता : पिपृग्धि रसेनान्नँ य्यजमानाय धेहि । |
| 21.5.c | कुविदङ्ग यवमन्तो यवञ् चिद्यथा दान्त्यनुपूर्वँ वियूय । |
| 21.5.d | इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्ति न्न जग्मु : । |

# अथ तृतीयदशक :

# अथ एकविंशोऽध्याय :

ॐ स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रेण । अमृताम् । अमृतेन *। मधुमती मिति मधु = मतीम् । मधुमतेति मधु = मता । सृजामि । सम् । सोमेन *। सोम : । असि । अश्विभ्या मित्यश्वि = भ्याम् । पच्यस्व । सरस्वत्यै । पच्यस्व । इन्द्राय । सुत्राम्ण इति सु = त्राम्णे । पच्यस्व *।।१।। परि । इत : । सिञ्चत । सुतम् । सोम : । य : । उत्तममित्युत् = तमम् । हवि : *। दधन्वान् । य : । नर्य : । अप्स्वित्यप् = सु । अन्त : । आ । (सुषाव । सुसावेति सुसाव )। सोमम् । अद्रिभि रित्यद्रि = भि : *।।२।। वायो : । पूत : । पवित्रेण । प्राङ् । सोम : । अतिद्रुत इत्यति = द्रुत : *। इन्द्रस्य । युज्य : । सखा । वायो : । पूत : । पवित्रेण । प्रत्यङ् । सोम : । अतिद्रुत इत्यति = द्रुत : *। इन्द्रस्य । युज्य : । सखा *।।३।। पुनाति । ते । परिस्रुत मिति परि = स्रुतम् । सोमम् । सूर्यस्य । दुहिता *। वारेण । शश्वता । तना *।।४।। ब्रह्म । क्षत्रम् । पवते । तेज : । इन्द्रियम् । सुरया । सोम : । सुत : । आसुत इत्या = सुत : । मदाय *। शुक्रेण । देव । देवता: । पिपृग्धि । रसेन । अन्नम् । यजमानाय । धेहि *। कुवित् । अङ्ग । यवमन्त इति यव = मन्त : । यवम् । चित् । यथा । दान्ति । अनुपूर्व मित्यनु = पूर्वम् । वियूयेति वि = यूय *। इहेहे तीह = इह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिष : । नमउक्ति मिति नम : = उक्तिम् । न । जग्मु : *।

| | |
|---|---|
| 21.5.e | उपयामगृहीतोऽस्यश्विभ्या न्त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे । |
| 21.5.f | एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥५॥ |
| 21.6.a | नाना हि वा न्देवहितꣳ सदस्कृतं मा सꣳ सृक्षाथां परमे व्योमन् । |
| 21.6.b | सुरा त्वमसि शुष्मिणी सोम एष मा मा हिꣳसी : स्वाँ<br>य्योनिमाविशन्ती ॥६॥ |
| 21.7.a | उपयामगृहीतोऽस्याश्विनं तेज : सारस्वतँ वीर्यमैन्द्रं बलम् । |
| 21.7.b | एष ते योनिर्मोदाय त्वाऽऽनन्दाय त्वा महसे त्वा ॥७॥ |
| 21.8.a | तेजोऽसि तेजो मयि धेहि वीर्यमसि वीर्यं मयि धेहि बलमसि बलं मयि<br>धेह्योजोऽस्योजो मयि धेहि । |
| 21.8.b | मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि ॥८॥ |
| 21.9.a | या व्याघ्रँ विषूचिकोभौ वृकं श्च रक्षति । |
| 21.9.b | श्येनं पतत्रिणꣳ सिꣳहꣳ सेमं पात्वꣳहस : ॥९॥ |
| 21.10.a | यदापिपेष मातरम् पुत्र : प्रमुदितो धयन् । |
| 21.10.b | एतत्तदग्ने अनृणो भवाम्यहतौ पितरौ मया ॥१०॥ |
| 21.11.a | संपृच : स्थ सं मा भद्रेण पृङ्क्त । |
| 21.11.b | विपृच : स्थ वि मा पापेन पृङ्क्त ॥११॥(१) |

| | |
|---|---|
| 21.12.a | देवा यज्ञमतन्वत भेषजं भिषजाऽश्विना । |

उपयामगृहीत इत्युपयाम = गृहीत : । असि । अश्विभ्या मित्यश्वि = भ्याम् । त्वा । सरस्वत्यै । त्वा । इन्द्राय । त्वा । सुत्राम्ण इति सु = त्राम्णे ✱। एष : । ते । योनि : । तेजसे । त्वा । वीर्याय । त्वा । बलाय । त्वा ✱।।५।। नाना । हि । वाम् । देवहित मिति देव = हितम् । सद : । कृतम् । मा । सम् । सृक्षाथाम् । परमे । व्योमन्निति वि = ओमन् ✱। सुरा । त्वम् । असि । शुष्मिणी । सोम : । एष : । मा । मा । हिꣳसी : । स्वाम् । योनिम् । आविशन्तीत्या = विशन्ती ✱।।६।। उपयामगृहीत इत्युपयाम = गृहीत : । असि । आश्विनम् । तेज : । सारस्वतम् । वीर्यम् । ऐन्द्रम् । बलम् ✱। एष : । ते । योनि : । मोदाय । त्वा । आनन्दायेत्या = नन्दाय । त्वा । महसे । त्वा ।।७।। तेज : । असि । तेज : । मयि । धेहि । वीर्यम् । असि । वीर्यम् । मयि । धेहि । बलम् । असि । बलम् । मयि । धेहि । ओज : । असि । ओज : । मयि । धेहि । मन्यु : । असि । मन्युम् । मयि । धेहि । सह : । असि । सह : । मयि । धेहि ✱।।८।। या । व्याघ्रम् । विषूचिका । उभौ । वृकम् । च । रक्षति ✱। श्येनम् । पतत्रिणम् । सिꣳहम् । सा । इमम् । पातु । अꣳहस : ✱।।९।। यत् । आपिपेषेत्या = पिपेष । मातरम् । पुत्र : । प्रमुदित इति प्र = मुदित : । धयन् ✱। एतत् । तत् । अग्ने । अनृण : । भवामि । अहतौ । पितरौ । मया ✱।।१०।। संपृच इति सं = पृच : । स्थ । सम् । मा । भद्रेण । पृङ्क्त । विपृच इति वि = पृच : । स्थ । वि । मा । पापेन । पृङ्क्त ✱।।११।।१।। २२९-७३=१५६।।

देवा : । यज्ञम् । अतन्वत । भेषजम् । भिषजा । अश्विना ✱।

| | |
|---|---|
| 21.12.b | वाचा सरस्वती भिषगिन्द्रायेन्द्रियाणि दधत : ॥१॥ |
| 21.13.a | दीक्षायै रूपꣳ शष्पाणि प्रायणीयस्य तोक्मानि । |
| 21.13.b | क्रयस्य रूपꣳ सोमस्य लाजा : सोमाꣳशवो मधु ॥२॥ |
| 21.14.a | आतिथ्यरूपं मासरं महावीरस्य नग्नहु : । |
| 21.14.b | रूपमुपसदामेतत्तिस्रो रात्री : सुराऽऽसुता ॥३॥ |
| 21.15.a | सोमस्य रूपं क्रीतस्य परिस्रुत्परिषिच्यते । |
| 21.15.b | अश्विभ्या न्दुग्धं भेषजमिन्द्रायैन्द्रꣳ सरस्वत्या ॥४॥ |
| 21.16.a | आसन्दी रूपꣳ राजासन्द्यै वेद्यै कुम्भी सुराधानी । |
| 21.16.b | अन्तर उत्तरवेद्या रूपं कारोतरो भिषक् ॥५॥ |
| 21.17.a | वेद्या वेदि : समाप्यते बर्हिषा बर्हिरिन्द्रियम् । |
| 21.17.b | यूपेन यूप आप्यते प्राणीतो अग्निरग्निना ॥६॥ |
| 21.18.a | हविर्धानँ य्यदश्विनाऽऽग्नीध्रँ य्यत्सरस्वती । |
| 21.18.b | इन्द्रायैन्द्रꣳ सदस्कृतं पत्नीशालं गार्हपत्य : ॥७॥ |
| 21.19.a | प्रैषेभि : प्रैषानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य । |
| 21.19.b | प्रयाजेभिरनुयाजान्वषट्कारेभि राहुती : ॥८॥ |
| 21.20.a | पशुभि : पशूनाप्नोति पुरोळाशै र्हवीꣳष्या । |
| 21.20.b | छन्दोभि : सामिधेनी र्याज्याभि र्वषट्कारान् ॥९॥ |

वाचा । सरस्वती । भिषक् । इन्द्राय । इन्द्रियाणि । दधत : *।।१।। दीक्षायै । रूपम् । शष्पाणि । (प्रायणीयस्य । प्रायनी यस्येति प्र = अयनीयस्य )। तोक्मानि *। क्रयस्य । रूपम् । सोमस्य । लाजा : । सोमाऽशव इति सोम = अऽशव : । मधु *।।२।। आतिथ्यरूपमित्या तिथ्य = रूपम् । मासरम् । महावीरस्येति महा = वीरस्य । नग्नहु : *। रूपम् । उपसदामित्युप = सदाम् । एतत् । तिस्र : । रात्री : । सुरा । आसुतेत्या = सुता *।।३।। सोमस्य । रूपम् । क्रीतस्य । परिस्रुदिति परि = स्रुत् । परि । सिच्यते *। अश्विभ्या मित्यश्वि = भ्याम् । दुग्धम् । भेषजम् । इन्द्राय । ऐन्द्रम् । सरस्वत्या *।।४।। आसन्दीत्या = सन्दी । रूपम् । राजासन्द्या इति राज = आसन्द्यै । वेद्यै । कुम्भी । सुराधानीति सुरा = धानी *। अन्तर : । उत्तर वेद्या इत्युत्तर = वेद्या : । रूपम् । कारोतर : । भिषक् *।।५।। वेद्या । वेदि : । सम् । आप्यते । बर्हिषा । बर्हि : । इन्द्रियम् *। यूपेन । यूप: । आप्यते । (प्रणीत : । प्रनीत इति प्र = नीत : )। अग्नि : । अग्निना *।।६।। हविर्धान मिति हवि : = धानम् । यत् । अश्विना । आग्नीध्रम् । यत् । सरस्वती *। इन्द्राय । ऐन्द्रम् । सद : । कृतम् । पत्नीशाल मिति पत्नी = शालम् । गार्हपत्य इति गार्ह = पत्य : *।।७।। प्रैषेभि रिति प्र = एषेभि : । प्रैषानिति प्र - एषान् । आप्नोति । आप्रीभि रित्या = प्रीभि : । आप्रीरित्या = प्री : । यज्ञस्य *। प्रयाजेभि रिति प्र = याजेभि : । अनुयाजानित्यनु = याजान् । वषट्कारेभि रिति वषट् = कारेभि : । आहुती रित्या = हुती : *।।८।। पशुभि रिति पशु = भि : । पशून् । आप्नोति । पुरोळाशै : । हवीऽषि । आ *। छन्दोभि रिति च्छन्द : = भि : । सामिधेनी रिति सां = इधेनी : । याज्याभि :।

| | |
|---|---|
| 21.21.a | धाना : करम्भ : सक्तव : परीवाप : पयो दधि । |
| 21.21.b | सोमस्य रूप९ हविष आमिक्षा वाजिनं मधु ॥१०॥ |
| 21.22.a | धानाना९ रूपं कुवलं परीवापस्य गोधूमा : । |
| 21.22.b | सक्तूना९ रूपं बदरमुपवाका : करम्भस्य ॥११॥ |
| 21.23.a | पयसो रूपँ य्यद्यवा दध्नो रूपं कर्कन्धूनि । |
| 21.23.b | सोमस्य रूपँ वाजिन९ सौम्यस्य रूपमामिक्षा ॥१२॥ |
| 21.24.a | आश्रावयेति स्तोत्रिया : प्रत्याश्रावो अनुरूप : । |
| 21.24.b | यजेति धाय्यारूपं प्रगाथा येयजामहा : ॥१३॥ |
| 21.25.a | अर्ध ऋचै रुक्थाना९ रूपं पदैराप्नोति निविद : । |
| 21.25.b | प्रणवै : शस्त्राणा९ रूपं पयसा सोम आप्यते ॥१४॥ |
| 21.26.a | अश्विभ्याम् प्रात : सवनमिन्द्रेणैन्द्रं माध्यन्दिनम् । |
| 21.26.b | वैश्वदेव९ सरस्वत्या तृतीयमाप्त९ सवनम् ॥१५॥ |
| 21.27.a | वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशम् । |
| 21.27.b | कुम्भीभ्याममम्भृणौ सुते स्थालीभि : स्थालीराप्नोति ॥१६॥ |
| 21.28.a | यजुर्भिराप्यन्ते ग्रहा ग्रहै : स्तोमाश्च विष्टुती : । |
| 21.28.b | छन्दोभिरुक्था शस्त्राणि साम्नाऽवभृथ आप्यते ॥१७॥ |

वषट्कारानिति वषट् = कारान् ✱।।९।। धाना : । करंभ : । सक्तव : । ( परीवाप : । परिवाप इति परि = वाप : )। पय : । दधि ✱। सोमस्य । रूपम् । हविष : । आमिक्षा । वाजिनम् । मधु ✱।।१०।। धानानाम् । रूपम् । कुवलम् । (परीवापस्य । परिवापस्येति परि = वापस्य )। गोधूमा : ✱। सक्तूनाम् । रूपम् । बदरम् । उपवाका इत्युप = वाका : । करंभस्य ✱।।११।। पयस : । रूपम् । यत् । यवा : । दध्न : । रूपम् । कर्कन्धूनि ✱। सोमस्य । रूपम् । वाजिनम् । सौम्यस्य । रूपम् । आमिक्षा ✱।।१२।। आ । श्रावय । इति । स्तोत्रिया : । प्रत्याश्राव इति प्रति = आश्राव : । अनुरूप इत्यनु = रूप : ✱। यज । इति । धाय्यारूपमिति धाय्या = रूपम् । प्रगाथा इति प्र = गाथा : । येयजामहा इति ये = यजामहा : ✱।।१३।। अर्धऋचैरित्यर्ध = ऋचै : । उक्थानाम् । रूपम् । पदै : । आप्नोति । निविद इति नि = विद : ✱। (प्रणवै । प्रनवैरिति प्र = नवै : )। शस्त्राणाम् । रूपम् । पयसा । सोम : । आप्यते ✱।।१४।। अश्विभ्या मित्यश्वि = भ्याम् । प्रातस्सवनमिति प्रात : = सवनम् । इन्द्रेण । ऐन्द्रम् । माध्यन्दिनम् ✱। वैश्वदेवमिति वैश्व = देवम् । सरस्वत्या । तृतीयम् । आप्तम् । सवनम् ✱।।१५।। वायव्यै : । वायव्यानि । आप्नोति । सतेन । द्रोणकलश मिति द्रोण = कलशम् ✱। कुंभीभ्याम् । अम्भृणौ । सुते । स्थालीभि : । स्थाली : । आप्नोति ✱।।१६।। यजुर्भि रिति यजु : = भि : । आप्यन्ते । ग्रहा : । ग्रहै : । स्तोमा : । च । (विष्टुती : । विस्तुती रिति वि = स्तुती : )✱। छन्दोभि रिति च्छन्द : = भि : । (उक्थाशस्त्राणि । उक्थ शस्त्राणी त्युक्थ = शस्त्राणि )। साम्ना । अवभृथ इत्यव = भृथ : । आप्यते ✱।।१७।।

| | |
|---|---|
| 21.29.a | इळाभि र्भक्षानाप्नोति सूक्तवाकेनाशिष : । |
| 21.29.b | शँय्युना पत्नीसँय्याजान्त्समिष्टयजुषा स॒स्थाम् ।।१८।। |
| 21.30.a | व्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम् । |
| 21.30.b | दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ।।१९।। |
| 21.31.a | एतावद्रूपँ य्यज्ञस्य यद्देवैर्ब्रह्मणा कृतम् । |
| 21.31.b | तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणी सुते ।।२०।।(२) |

| | |
|---|---|
| 21.32.a | सुरावन्तं बर्हिषद॒ सुवीरँ य्यज्ञ॒ हिन्वन्ति महिषा नमोभि : । |
| 21.32.b | दधाना : सोमन् दिवि देवतासु मदेमेन्द्रँ य्यजमाना : स्वर्का : ।।१।। |
| 21.33.a | यस्ते रस : संभृत ओषधीषु सोमस्य शुष्म : सुरया सुतस्य । |
| 21.33.b | तेन जिन्व यजमानं मदेन सरस्वती मश्विना इन्द्रमग्निम् ।।२।। |
| 21.34.a | यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय । |
| 21.34.b | इमं त॒ शुक्रं मधुमन्तमिन्दु॒ सोम॒ राजानमिह भक्षयामि ।।३।। |
| 21.35.a | यदत्र रिप्त॒ रसिन : सुतस्य यदिन्द्रो अपिबच्छचीभि : । |
| 21.35.b | अहं तदस्य मनसा शिवेन सोम॒ राजानमिह भक्षयामि ।।४।। |
| 21.36.a | पितृभ्य : स्वधायिभ्य : स्वधा नम : पितामहेभ्यः स्वधायिभ्य : स्वाधा नम : । |

इळाभि : । भक्षान् । आप्नोति । सूक्तवाकेनेति सूक्त = वाकेन । आशिष इत्या = शिष : ✱। शँय्युनेति शं = युना । पत्नीसँय्याजा निति पत्नी = सँय्याजान् । समिष्टयजुषेति समिष्ट = यजुषा । सꣳस्था मिति सं = स्थाम् ✱॥१८॥ व्रतेन । दीक्षाम् । आप्नोति । दीक्षया । आप्नोति । दक्षिणाम् ✱। दक्षिणा । श्रद्धाम् । आप्नोति । श्रद्धया । सत्यम् । आप्यते ✱॥१९॥ एतावत् । रूपम् । यज्ञस्य । यत् । देवै : । ब्रह्मणा । कृतम् ✱। तत् । एतत् । सर्वम् । आप्नोति । यज्ञे । सौत्रामणी । सुते ✱॥२०॥२॥२२८-०=२२८॥

सुरावन्त मिति सुरा = वन्तम् । (बर्हिषदम् । बर्हिसद मिति बर्हि = सदम् )। सुवीर मिति सु = वीरम् । यज्ञम् । हिन्वन्ति । महिषा : । नमोभि रिति नम : = भि : ✱। दधाना : । सोमम् । दिवि । देवतासु । मदेम । इन्द्रम् । यजमाना : । स्वर्का इति सु = अर्का : ✱॥१॥ य : । ते । रस : । संभृत इति सं = भृत : । ओषधीषु । सोमस्य । शुष्म : । सुरया । सुतस्य ✱। तेन । जिन्व । यजमानम् । मदेन । सरस्वतीम् । अश्विनौ । इन्द्रम् । अग्निम् ✱॥२॥ यम् । अश्विना । नमुचे : । आसुरात् । अधि । सरस्वती । असुनोत् । इन्द्रियाय ✱। इमम् । तम् । शुक्रम् । मधुमन्त मिति मधु = मन्तम् । इन्दुम् । सोमम् । राजानम् । इह । भक्षयामि ✱॥३॥ यत् । अत्र । रिप्तम् । रसिन : । सुतस्य । यत् । इन्द्र : । अपिबत् । शचीभि : ✱। अहम् । तत् । अस्य । मनसा । शिवेन । सोमम् । राजानम् । इह । भक्षयामि ✱॥४॥ पितृभ्य इति पितृ = भ्य : । स्वधायिभ्य इति स्वधायि = भ्य : । स्वधा । नम : । पितामहेभ्य : । स्वधायिभ्य इति स्वधायि = भ्य : ।

| | |
|---|---|
| 21.36.b | प्रपितामहेभ्य : स्वधायिभ्य : स्वधा नम : ।।५।। |
| 21.37.a | अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितर : । |
| 21.37.b | पितर : शुन्धध्वम् ।।६।। |
| 21.38.a | पुनन्तु मा पितर : सोम्यास : पुनन्तु मा पितामहा : पुनन्तु प्रपितामहा : । |
| 21.38.b | पवित्रेण शतायुषा ।।७।। |
| 21.39.a | पुनन्तु मा पितामहा : पुनन्तु प्रपितामहा : । |
| 21.39.b | पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ।।८।। |
| 21.40.a | अग्न आयूꣷषि पवस आसुवोर्जमिषं च न : । |
| 21.40.b | आरे बाधस्व दुच्छुनाम् ।।९।। |
| 21.41.a | पुनन्तु मा देवजना : पुनन्तु मनसा धिय : । |
| 21.41.b | पुनन्तु विश्वा भूतानि जातवेद : पुनीहि मा ।।१०।। |
| 21.42.a | पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् । |
| 21.42.b | अग्ने क्रत्वा क्रतूꣳ रनु ।।११।। |
| 21.43.a | यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । |
| 21.43.b | ब्रह्म तेन पुनातु मा ।।१२।। |
| 21.44.a | पवमान : सो अद्य न : पवित्रेण विचर्षणि : । |

स्वधा । नमः । प्रपितामहेभ्य इति प्र = पितामहेभ्यः । स्वधायिभ्य इति स्वधायि = भ्यः । स्वधा । नमः ॥५॥ अक्षन् । पितरः । अमीमदन्त । पितरः । अतीतृपन्त । पितरः । पितरः । शुन्धध्वम् ॥६॥ पुनन्तु । मा । पितरः । सोम्यासः । पुनन्तु । मा । पितामहाः । पुनन्तु । प्रपितामहा इति प्र = पितामहाः । पवित्रेण । शतायुषेति शत = आयुषा ॥७॥ पुनन्तु । मा । पितामहाः । पुनन्तु । प्रपितामहा इति प्र = पितामहाः । पवित्रेण । शतायुषेति शत = आयुषा । विश्वम् । आयुः । वि । अश्नवै ॥८॥ अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । नः । आरे । बाधस्व । दुच्छुनाम् ॥९॥ पुनन्तु । मा । देवजना इति देव = जनाः । पुनन्तु । मनसा । धियः । पुनन्तु । विश्वा । भूतानि । जातवेद इति जात = वेदः । पुनीहि । मा ॥१०॥ पवित्रेण । पुनीहि । मा । शुक्रेण । देव । दीद्यत् । अग्ने । क्रत्वा । क्रतून् । अनु ॥११॥ यत् । ते । पवित्रम् । अर्चिषि । अग्ने । विततमिति वि = ततम् । अन्तरा । ब्रह्म । तेन । पुनातु । मा ॥१२॥ पवमानः । सः । अद्य । नः । पवित्रेण । विचर्षणिरिति वि = चर्षणिः ।

| | |
|---|---|
| 21.44.b | य : पोता स पुनातु मा ।।१३।। |
| 21.45.a | उभाभ्या न्देव सवित : पवित्रेण सवेन च । |
| 21.45.b | मां पुनीहि विश्वत : ।।१४।। |
| 21.46.a | वैश्वदेवी पुनती देव्याऽगाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठा : । |
| 21.46.b | तया मदन्त : सधमादेषु वयꣳ स्याम पतयो रयीणाम् ।।१५।। |
| 21.47.a | ये समाना : समनस : पितरो यमराज्ये । |
| 21.47.b | तेषाँ ल्लोक : स्वधा नमो यज्ञो देवेषु कल्पताम् ।।१६।। |
| 21.48.a | ये समाना : समनसो जीवा जीवेषु मामका : । |
| 21.48.b | तेषाꣳ श्रीर्मयि कल्पतामस्मिँ ल्लोके शतꣳ समा : ।।१७।। |
| 21.49.a | द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् । |
| 21.49.b | ताभ्यामिदँ विश्वमेजत्समेति यदन्तरा पितरम् मातरञ्च ।।१८।। |
| 21.50.a | इदꣳ हवि : प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये । |
| 21.50.b | आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि । |
| 21.50.c | अग्नि : प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ।।१९।।(३) |

| | |
|---|---|
| 21.51.a | उदीरता मवर उत्परास उन्मध्यमा : पितर : सोम्यास : । |
| 21.51.b | असुँ य्य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ।।१।। |

य : । पोता । स : । पुनातु । मा *।।१३।। उभाभ्याम् । देव । सवित रिति
सवित : । पवित्रेण । सवेन । च *। माम् । पुनीहि । विश्वत : *।।१४।।
वैश्वदेवीति वैश्व = देवी । पुनती । देवी । आ । अगात् । यस्याम् । इमा : ।
बह्व्य : । तन्व : । वीतपृष्ठा इति वीत = पृष्ठा : *। तया । मदन्त : ।
सधमादेष्विति सध = मादेषु । वयम् । स्याम । पतय : । रयीणाम् *।।१५।। ये
। समाना : । समनस इति स = मनस : । पितर : । यमराज्य इति यम = राज्ये
*। तेषाम् । लोक : । स्वधा । नम : । यज्ञ : । देवेषु । कल्पताम् *।।१६।। ये
। समाना : । समनस इति स = मनस : । जीवा : । जीवेषु । मामका : *।
तेषाम् । श्री : । मयि । कल्पताम् । अस्मिन् । लोके । शतम् । समा :
*।।१७।। द्वे इति द्वे । सृती इति सृती । अशृणवम् । पितॄणाम् । अहम् ।
देवानाम् । उत । मर्त्यानाम् *। ताभ्याम् । इदम् । विश्वम् । एजत् । सम् । एति
। यत् । अन्तरा । पितरम् । मातरम् । च *।।१८।। इदम् । हवि : । प्रजननन
मिति प्र = जननम् । मे । अस्तु । दशवीर मिति दश = वीरम् । सर्वगण मिति
सर्व = गणम् । स्वस्तये *। आत्मसनीत्यात्म = सनि । प्रजासनीति प्रजा = सनि
। पशुसनीति पशु = सनि । लोकसनीति लोक = सनि । अभयसनीत्य भय =
सनि *। अग्नि : । प्रजामिति प्र = जाम् । बहुलाम् । मे । करोतु । अन्नम् । पय
: । रेत : । अस्मासु । धत्त *।।१९।।३।।२५९-१९=२४०।।

उत् । ईरताम् । अवरे । उत् । परास : । उत् । मध्यमा : । पितर : । सोम्यास
: *। असुम् । ये । ईयु : । अवृका : । ऋतज्ञा इत्यृत = ज्ञा : । ते । न : ।
अवन्तु । पितर : । हवेषु *।।१।।

| | |
|---|---|
| 21.52.a | त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् । |
| 21.52.b | तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीरा : ॥२॥ |
| 21.53.a | त्वया हि न : पितर : सोम पूर्वे कर्माणि चक्रु : पवमान धीरा : । |
| 21.53.b | वन्वन्नवात : परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा न : ॥३॥ |
| 21.54.a | त्वꣳ सोम पितृभि : सँविदानोऽनु द्यावापृथिवी आ ततन्थ । |
| 21.54.b | तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥४॥ |
| 21.55.a | बर्हिषद : पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । |
| 21.55.b | त आ गतावसा शन्तमेनाथा न : शँ य्योररपो दधात ॥५॥ |
| 21.56.a | उपहूता : पितर : सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । |
| 21.56.b | त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥६॥ |
| 21.57.a | आऽहं पितॄन्त्सुविदत्राँ (२) -अवित्सि नपातं च विक्रमणं च विष्णो :। |
| 21.57.b | बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठा : ॥७॥ |
| 21.58.a | अग्निष्वात्ता : पितर एह गच्छत सद : सद : सदत सुप्रणीतय : । |

त्वम् । सोम । प्र । चिकित : । मनीषा । त्वम् । रजिष्ठम् । अनु । नेषि । पन्थाम् ✻। तव । (प्रणीती । प्रनीतीति प्र = नीती )। पितर : । न : । इन्दो इतीन्दो । देवेषु । रत्नम् । अभजन्त । धीरा : ✻।।२।। त्वया । हि । न : । पितर : । सोम । पूर्वे । कर्माणि । चक्रु : । पवमान । धीरा : ✻। वन्वन् । अवात : । परिधीनिति परि = धीन् । अप । ऊर्णु । वीरेभि : । अश्वै : । मघवेति मघ = वा । भव । न : ✻।।३।। त्वम् । सोम । पितृभि रिति पितृ = भि : । सँविदान इति सं = विदान : । अनु । द्यावापृथिवी इति द्यावापृथिवी । आ । ततन्थ ✻। तस्मै । ते । इन्दो इतीन्दो । हविषा । विधेम । वयम् । स्याम । पतय : । रयीणाम् ✻।।४।। (बर्हिषद : । बर्हिसद इति बर्हि = सद : )। पितर : । ऊती । अर्वाक् । इमा । व : । हव्या । चकृम । जुषध्वम् ✻।। ते । आ । गत । अवसा । शन्तमेनेति शं = तमेन । अथ । न : । शम् । यो : । अरप : । दधात ✻।।५।। उपहूता इत्युप = हूता : । पितर : । सोम्यास : । बर्हिष्येषु । निधिष्विति नि = धिषु । प्रियेषु ✻। ते । आ । गमन्तु । ते । इह । श्रुवन्तु । अधि । ब्रुवन्तु । ते । अवन्तु । अस्मान् ✻।।६।। आ । अहम् । पितॄन् । सुविदत्रानिति सु = विदत्रान् । अवित्सि । नपातम् । च । विक्रमण मिति वि = क्रमणम् । च । विष्णो : ✻। (बर्हिषद : । बर्हिसद इति बर्हि = सद : )। ये । स्वधया । सुतस्य । भजन्त । पित्व : । ते । इह । आगमिष्ठा इत्या = गमिष्ठा : ✻।।७।। (अग्निष्वात्ता : । अग्निस्वात्ता इत्यग्नि = स्वात्ता : )। पितर : । आ । इह । गच्छत । सदस्सद इति सद : = सद : । सदत । (सुप्रणीतय : । सुप्रनीतय इति सु = प्रनीतय : )✻।

| | |
|---|---|
| 21.58.b | अत्ता हवीॅषि प्रयतानि बर्हिष्यथा रयिॅ सर्ववीरं दधातन ॥८॥ |
| 21.59.a | आ यन्तु न : पितर: सोम्यासोऽग्निष्वात्ता : पथिभिर्देवयानै : । |
| 21.59.b | अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥९॥ |
| 21.60.a | ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिव : स्वधया मादयन्ते । |
| 21.60.b | तेभ्य : स्वराळसुनीतिमेताँ य्यथावशं तन्वङ् कल्पयाति ॥१०॥ |
| 21.61.a | अग्निष्वात्तानृतुमतो हवामहे नाराशॅसे सोमपीथँ य्य आशु : । |
| 21.61.b | ते नो विप्रास : सुहवा भवन्तु वयॅ स्याम पतयो रयीणाम् ॥११॥ |
| 21.62.a | आच्या जानु दक्षिणतो निषद्येमँ य्यज्ञमभि गृणीत विश्वे । |
| 21.62.b | मा हिॅसिष्ट पितर : केन चिन्नो यद्व आग : पुरुषता कराम ॥१२॥ |
| 21.63.a | आसीनासो अरुणीनामुपस्थे रयि न्धत्त दाशुषे मर्त्याय । |
| 21.63.b | पुत्रेभ्य : पितरस्तस्य वस्व : प्र यच्छत त इहोर्ज न्दधात ॥१३॥ |
| 21.64.a | यमग्ने कव्यवाहन त्वं चिन्मन्यसे रयिम् । |
| 21.64.b | तन्नो गीर्भि : श्रवाय्य न्देवत्रा पनया युजम् ॥१४॥ |

अत्ता । हवीꣳषि । प्रयता नीतिं प्र = यतानि । बर्हिषि । अथ । रयिम् । सर्ववीर मिति सर्व = वीरम् । दधातन ॥८॥ आ । यन्तु । न: । पितर: । सोम्यास: । (अग्निष्वात्ता: । अग्निस्वात्ता इत्य ग्नि = स्वात्ता: )। पथिभि रिति पथि = भि: । देवयानै रिति देव = यानै: । अस्मिन् । यज्ञे । स्वधया । मदन्त: । अधि । ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥९॥ ये । (अग्निष्वात्ता: । अग्निस्वात्ता इत्यग्नि = स्वात्ता: )। ये । (अनग्निष्वात्ता: । अनग्निस्वात्ता इत्यनग्नि = स्वात्ता: )। मध्ये । दिव: । स्वधया । मादयन्ते । तेभ्य: । स्वराळिति स्व = राट् । असुनीति मित्यसु = नीतिम् । एताम् । यथावशमिति यथा = वशम् । तन्वम् । कल्पयाति ॥१०॥ (अग्निष्वात्तान् । अग्निस्वात्ता नित्यग्नि = स्वात्तान् )। ऋतुमत इत्यृतु = मत: । हवामहे । नाराशꣳसे । सोमपीथ मिति सोम = पीथम् । ये । आशु: । ते । न: । विप्रास: । सुहवा इति सु = हवा: । भवन्तु । वयम् । स्याम । पतय: । रयीणाम् ॥११॥ आच्येत्या = अच्य । जानु । दक्षिणत: । (निषद्य । निसद्येति नि = सद्य )। इमम् । यज्ञम् । अभि । गृणीत । विश्वे । मा । हिꣳसिष्ट । पितर: । केन । चित् । न: । यत् । व: । आग: । पुरुषता । कराम ॥१२॥ आसीनास: । अरुणीनाम् । उपस्थ इत्युप = स्थे । रयिम् । धत्त । दाशुषे । मर्त्याय । पुत्रेभ्य: । पितर: । तस्य । वस्व: । प्र । यच्छत । ते । इह । ऊर्जम् । दधात ॥१३॥ यम् । अग्ने । कव्यवाहनेति कव्य = वाहन । त्वम् । चित् । मन्यसे । रयिम् । तम् । न: । गीर्भि रिति गी: = भि: । श्रवाय्यम् । देवत्रेति देव = त्रा । पनय । युजम् ॥१४॥

| | |
|---|---|
| 21.65.a | यो अग्नि : कव्यवाहन : पितॄन्यक्षदृतावृध : । |
| 21.65.b | प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥१५॥ |
| 21.66.a | त्वमग्न ईळितो जातवेदो ऽवाड्ढव्यानि सुरभीणि कृत्वी । |
| 21.66.b | प्रादा : पितृभ्य : स्वधया ते अक्षन्नद्धि त्वं देवप्रयता हवीꣳषि ॥१६॥ |
| 21.67.a | इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयु : । |
| 21.67.b | ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥१७॥ |
| 21.68.a | ये चेह पितरो ये च नेह याꣳश्च विद्म याँ (२) - उ च न प्रविद्म । |
| 21.68.b | त्वँ वेत्थ यति ते जातवेद : स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व ॥१८॥ |
| 21.69.a | अधा यथा न : पितर : परास : प्रत्नासो अग्न ऋतमाशुषाणा : । |
| 21.69.b | शुचीदयन्दीधितिमुक्थशास : क्षामा भिन्दन्तो अरुणीरप व्रन् ॥१९॥ |
| 21.70.a | उशन्तस्त्वा नि धीमह्युशन्त : समिधीमहि । |
| 21.70.b | उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥२०॥ |
| 21.71.a | अपां फेनेन नमुचे : शिर इन्द्रोदवर्तय : । |
| 21.71.b | विश्वा यदजय : स्पृध : ॥२१॥(४) |

| | |
|---|---|
| 21.72.a | सोमो राजाऽमृतꣳ सुत ऋजीषेणाजहान्मृत्युम् । |

य : । अग्निः । कव्यवाहन इति कव्य = वाहन : । पितृन् । यक्षत् । (ऋतावृध : । ऋतवृध इत्यृत = वृध : )✱। प्र । इत् । ऊँ इत्यूँ । हव्यानि । वोचति । देवेभ्य : । च । पितृभ्य इति पितृ = भ्य : । आ ✱।।१५।। त्वम् । अग्ने । ईळित : । जातवेद इति जात = वेद : । अवाट् । हव्यानि । सुरभीणि । कृत्वी ✱। प्र । अदा : । पितृभ्य इति पितृ = भ्य : । स्वधया । ते । अक्षन् । अद्धि । त्वम् । देव । प्रयतेति प्र = यता । हवीᳪषि ✱।।१६।। इदम् । पितृभ्य इति पितृ = भ्य : । नम : । अस्तु । अद्य । ये । पूर्वास : । ये । उपरास : । ईयु : ✱। ये । पार्थिवे । रजसि । आ । (निषत्ता : । निसत्ता इति नि = सत्ता : )। ये । वा । नूनम् । सुवृजनास्विति सु = वृजनासु । विक्षु ✱।।१७।। ये । च । इह । पितर : । ये । च । न । इह । यान् । च । विद्म । यान् । ऊँ इत्यूँ । च । न । प्रविद्मेति प्र = विद्म ✱। त्वम् । वेत्थ । यति । ते । जातवेद इति जात = वेद : । स्वधाभि : । यज्ञम् । सुकृत मिति सु = कृतम् । जुषस्व ✱।।१८।। अध । यथा । न : । पितर : । परास : । प्रत्नास : । अग्ने । ऋतम् । आशुषाणा : ✱। शुचि । इत् । अयन् । दीधितिम् । (उक्थशास : । उक्थशस इत्युक्थ = शस : )। क्षाम । भिन्दन्त : । अरुणी : । अप । व्रन् ✱।।१९।। उशन्त : । त्वा । नि । धीमहि । उशन्त : । सम् । इधीमहि ✱। उशन् । उशत : । आ । वह । पितृन् । हविषे । अत्तवे ✱।।२०।। अपाम् । फेनेन । नमुचे : । शिर : । इन्द्र । उत् । अवर्तय : ✱। विश्वा : । यत् । अजय : । स्पृध : ✱।।२१।।४।।३६९-० =३६९।।

सोम : । राजा । अमृतम् । सुत : । ऋजीषेण । अजहात् । मृत्युम् ✱।

| | |
|---|---|
| 21.72.b | ऋतेन सत्यमिन्द्रियँ विपान१ शुक्रमन्धस इन्द्रस्येन्द्रिय मिदं पयोऽमृतं मधु ॥१॥ |
| 21.73.a | अद्भ्य : क्षीरँ व्यपिबत् क्रुङ्ङाङ्गिरसो धिया । |
| 21.73.b | ऋतेन सत्यमिन्द्रियँ विपान१ शुक्रमन्धस इन्द्रस्येन्द्रिय मिदं पयोऽमृतं मधु । |
| 21.73.c | सोममद्भ्यो व्यपिबच्छन्दसा ह१स : शुचिषत् । |
| 21.73.d | ऋतेन सत्यमिन्द्रियँ विपान१ शुक्रमन्धस इन्द्रस्येन्द्रिय मिदं पयोऽमृतं मधु । |
| 21.73.e | अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पय : सोमम् प्रजापति : । |
| 21.73.f | ऋतेन सत्यमिन्द्रियँ विपान१ शुक्रमन्धस इन्द्रस्येन्द्रिय मिदं पयोऽमृतं मधु ॥२॥ |
| 21.74.a | रेतो मूत्रँ वि जहाति योनिम् प्रविशदिन्द्रियम् । |
| 21.74.b | गर्भो जरायुणाऽऽवृत उल्बञ् जहाति जन्मना । |
| 21.74.c | ऋतेन सत्यमिन्द्रियँ विपान१ शुक्रमन्धस इन्द्रस्येन्द्रिय मिदं पयोऽमृतं मधु ॥३॥ |
| 21.75.a | दृष्ट्वा रूपे व्याऽकरोत् सत्यानृते प्रजापति : । |
| 21.75.b | अश्रद्धामनृते ऽदधाच्छ्रद्धा१ सत्ये प्रजापति : । |

ऋतेन । सत्यम् । इन्द्रियम् । विपान मिति वि = पानम् । शुक्रम् । अन्धस : । इन्द्रस्य । इन्द्रियम् । इदम् । पय : । अमृतम् । मधु *।।१।। अद्भ्य इत्यत् = भ्य : । क्षीरम् । वि । अपिबत् । क्रुङ् । आङ्गिरस : । धिया *। ऋतेन । सत्यम् । इन्द्रियम् । विपान मिति वि = पानम् । शुक्रम् । अन्धस : । इन्द्रस्य । इन्द्रियम् । इदम् । पय : । अमृतम् । मधु *। सोमम् । अद्भ्य इत्यत् = भ्य : । वि । अपिबत् । छन्दसा । हꣳस : । (शुचिषत् । शुचिसदिति शुचि = सत् )*। ऋतेन । सत्यम् । इन्द्रियम् । विपान मिति वि = पानम् । शुक्रम् । अन्धस : । इन्द्रस्य । इन्द्रियम् । इदम् । पय : । अमृतम् । मधु *। अन्नात् । परिस्रुत इति परि = स्रुत : । रसम् । ब्रह्मणा । वि । अपिबत् । क्षत्रम् । पय : । सोमम् । प्रजापति रिति प्रजा = पति : *। ऋतेन । सत्यम् । इन्द्रियम् । विपान मिति वि = पानम् । शुक्रम् । अन्धस : । इन्द्रस्य । इन्द्रियम् । इदम् । पय : । अमृतम् । मधु *।।२।। रेत : । मूत्रम् । वि । जहाति । योनिम् । प्रविशदिति प्र = विशत् । इन्द्रियम् *। गर्भ : । जरायुणा । आवृत इत्या = वृत : । उल्बम् । जहाति । जन्मना *। ऋतेन । सत्यम् । इन्द्रियम् । विपान मिति वि = पानम् । शुक्रम् । अन्धस : । इन्द्रस्य । इन्द्रियम् । इदम् । पय : । अमृतम् । मधु *।।३।। दृष्ट्वा । रूपे इति रूपे । वि । आ । अकरोत् । सत्यानृते इति सत्यानृते । प्रजापति रिति प्रजा = पति : *। अश्रद्धाम् । अनृते । अदधात् । श्रद्धाम् । सत्ये । प्रजापति रिति प्रजा = पति : *।

| | |
|---|---|
| 21.75.c | ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रिय मिदं पयोऽमृतं मधु ।।४।। |
| 21.76.a | वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापति : । |
| 21.76.b | ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रिय मिदं पयोऽमृतं मधु । |
| 21.76.c | दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रँ व्यपिबत्पय : सोमम् प्रजापति : । |
| 21.76.d | ऋतेन सत्यमिन्द्रियँ विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रिय मिदं पयोऽमृतं मधु।।५।।(५) |

| | |
|---|---|
| 21.77.a | सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति । |
| 21.77.b | अश्विना यज्ञꣳ सविता सरस्वतीन्द्रस्य रूपँ वरुणो भिषज्यन् ।।१।। |
| 21.78.a | तदस्य रूपममृतꣳ शचीभिस्तिस्रो दधुर्देवता : सꣳरराणा : । |
| 21.78.b | लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य माꣳसमभवन्न लाजा : ।।२।। |
| 21.79.a | तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम् । |
| 21.79.b | अस्थि मज्जानं मासरै : कारोतरेण दधतो गवा न्त्वचि ।।३।। |
| 21.80.a | सरस्वती मनसा पेशलँ वसु नासत्याभ्याँ वयति दर्शतँ वपु : । |
| 21.80.b | रसम् परिस्रुता न रोहितं नग्नहुर्धीरस्तसरं न वेम ।।४।। |

ऋतेन । सत्यम् । इन्द्रियम् । विपान मिति वि = पानम् । शुक्रम् । अन्धस : । इन्द्रस्य । इन्द्रियम् । इदम् । पय : । अमृतम् । मधु *।।४।। वेदेन । रूपे इति रूपे । वि । अपिबत् । सुतासुतौ । प्रजापति रिति प्रजा = पति : *। ऋतेन । सत्यम् । इन्द्रियम् । विपान मिति वि = पानम् । शुक्रम् । अन्धस : । इन्द्रस्य । इन्द्रियम् । इदम् । पय : । अमृतम् । मधु *। दृष्ट्वा । परिस्रुत इति परि = स्रुत : । रसम् । शुक्रेण । शुक्रम् । वि । अपिबत् । पय : । सोमम् । प्रजापति रिति प्रजा = पति : *। ऋतेन । सत्यम् । इन्द्रियम् । विपान मिति वि = पानम् । शुक्रम् । अन्धस : । इन्द्रस्य । इन्द्रियम् । इदम् । पय : । अमृतम् । मधु *।।५।।५।।१६९-८४=८५।।

सीसेन । तन्त्रम् । मनसा । मनीषिण : । ऊर्णासूत्रेणे त्यूर्णा = सूत्रेण । कवय : । वयन्ति *। अश्विना । यज्ञम् । सविता । सरस्वती । इन्द्रस्य । रूपम् । वरुण : । भिषज्यन् *।।१।। तत् । अस्य । रूपम् । अमृतम् । शचीभि : । तिस्र : । दधु : । देवता : । सञ्ररराणा इति सं = रराणा : *। लोमानि । शष्पै : । बहुधा । न । तोक्मभि रिति तोक्म = भि : । त्वक् । अस्य । माञ्सम् । अभवत् । न । लाजा : *।।२।। तत् । अश्विना । भिषजा । रुद्रवर्तनीति रुद्र = वर्तनी । सरस्वती । वयति । पेश : । अन्तरम् *। अस्थि । मज्ज्ञानम् । मासरै : । कारोतरेण । दधत : । गवाम् । त्वचि *।।३।। सरस्वती । मनसा । पेशलम् । वसु । नासत्याभ्याम् । वयति । दर्शतम् । वपु : *। रसम् । परिस्रुतेति परि = स्रुता । न । रोहितम् । नग्नहु : । धीर : । तसरम् । न । वेम *।।४।।

| | |
|---|---|
| 21.81.a | पयसा शुक्रममृतञ् जनित्रꣳ सुरया मूत्राज्जनयन्त रेत : । |
| 21.81.b | अपामति न्दुर्मतिम् बाधमाना ऊवध्यँ वातꣳ सब्वं तदारात् ।।५।। |
| 21.82.a | इन्द्र : सुत्रामा हृदयेन सत्यं पुरोळाशेन सविता जजान । |
| 21.82.b | यकृत् क्लोमानँ वरुणो भिषज्यन् मतस्ने वायव्यैर्न मिनातिपित्तम् ।।६।। |
| 21.83.a | आन्त्राणि स्थालीर्मधु पिन्वमाना गुदा : पात्राणि सुदुघा न धेनु : । |
| 21.83.b | श्येनस्य पत्रं न प्लीहा शचीभिरासन्दी नाभिरुदरं न माता ।।७।। |
| 21.84.a | कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्त : । |
| 21.84.b | प्लाशिर्व्यक्त : शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्य : ।।८।। |
| 21.85.a | मुखꣳ सदस्य शिर इत् सतेन जिह्वा पवित्रमश्विना ऽऽसन्त्सरस्वती । |
| 21.85.b | चप्पं न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी ।।९।। |
| 21.86.a | अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन । |
| 21.86.b | पक्ष्माणि गोधूमै : कुवलैरुतानि पेशो न शुक्रमसितँ वसाते ।।१०।। |
| 21.87.a | अविर्न मेषो नसि वीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् । |
| 21.87.b | सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान ।।११।। |
| 21.88.a | इन्द्रस्य रूपमृषभो बलाय कर्णाभ्याꣳ श्रोत्रममृतं ग्रहाभ्याम् । |

पयसा । शुक्रम् । अमृतम् । जनित्रम् । सुरया । मूत्रात् । जनयन्त । रेत : ✱। अप । अमतिम् । दुर्मति मितिदु : = मतिम् । बाधमाना : । ऊवध्यम् । वातम् । सब्वम् । तत् । आरात् ✱।।५।। इन्द्र : । सुत्रामेति सु = त्रामा । हृदयेन । सत्यम् । पुरोळाशेन । सविता । जजान ✱। यकृत् । क्लोमानम् । वरुण : । भिषज्यन् । मतस्ने इति मतस्ने । वायव्यै : । न । मिनाति । पित्तम् ✱।।६।। आन्त्राणि । स्थाली : । मधु । पिन्वमाना : । गुदा : । पात्राणि । सुदुघेति सु = दुघा । न । धेनु : ✱। श्येनस्य । पत्रम् । न । प्लीहा । शचीभि : । आसन्दीत्या = सन्दी । नाभि : । उदरम् । न । माता ✱।।७।। कुम्भ : । वनिष्ठु : । जनिता । शचीभि : । यस्मिन् । अग्रे । योन्याम् । गर्भ : । अन्तरित्यन्त : ✱। प्लाशि : । व्यक्त इति वि = अक्त : । शतधार इति शत = धार : । उत्स : । दुहे । न । कुंभी । स्वधाम् । पितृभ्य इति पितृ = भ्य : ✱।।८।। मुखम् । सत् । अस्य । शिर : । इत् । सतेन । जिह्वा । पवित्रम् । अश्विना । आसन् । सरस्वती ✱। चप्पम् । न । पायु : । भिषक् । अस्य । वाल : । वस्ति : । न । शेप : । हरसा । तरस्वी ✱।।९।। अश्विभ्या मित्यश्वि = भ्याम् । चक्षु : । अमृतम् । ग्रहाभ्याम् । छागेन । तेज : । हविषा । शृतेन ✱। पक्ष्माणि । गोधूमै : । कुवलै : । ऊतानि । पेश : । न । शुक्रम् । असितम् । वसाते इति वसाते ✱।।१०।। अवि : । न । मेष : । नसि । वीर्याय । प्राणस्य । पन्था : । अमृत : । ग्रहाभ्याम् ✱। सरस्वती । उपवाकै रित्युप = वाकै : । व्यान मिति वि = आनम् । नस्यानि । बर्हि : । बदरै : । जजान ✱।।११।। इन्द्रस्य । रूपम् । ऋषभ : । बलाय । कर्णाभ्याम् । श्रोत्रम् । अमृतम् । ग्रहाभ्याम् ✱।

| | |
|---|---|
| 21.88.b | यवा न बर्हि भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखात् ।।१२।। |
| 21.89.a | आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम । |
| 21.89.b | केशा न शीर्षन्यशसे श्रियै शिखा सिꣳहस्य लोम त्विषिरिन्द्रियाणि ।।१३।। |
| 21.90.a | अङ्गान्यात्मन् भिषजा तदश्विनाऽऽत्मानमङ्गैः समधात् सरस्वती । |
| 21.90.b | इन्द्रस्य रूपꣳ शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधाना : ।।१४।। |
| 21.91.a | सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति । |
| 21.91.b | अपाꣳ रसेन वरुणो न साम्नेन्द्रꣳ श्रियै जनयन्नप्सु राजा ।।१५।। |
| 21.92.a | तेज : पशूनाꣳ हविरिन्द्रियावत् परिस्रुता पयसा सारघं मधु । |
| 21.92.b | अश्विभ्या न्दुग्धं भिषजा सरस्वत्या सुतासुताभ्या ममृत : सोम इन्दु : ।।१६।।(६) |

| | |
|---|---|
| 21.93.a | क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि । |
| 21.93.b | मा त्वा हिꣳसीन्मा मा हिꣳसी : । |
| 21.93.c | निषसाद धृतव्रतो वरुण : पस्त्यास्वा । |
| 21.93.d | साम्राज्याय सुक्रतु : । |
| 21.93.e | मृत्यो : पाहि विद्योत्पाहि । |
| 21.93.f | देवस्य त्वा सवितु : प्रसवेऽश्विनोर्बाहुभ्याम् पूष्णो हस्ताभ्याम् ।।१।। |

यवा : । न । बर्हि : । भ्रुवि । केसराणि । कर्कन्धु । जज्ञे । मधु । सारघम् । मुखात् ✱।।१२।। आत्मन् । उपस्थ इत्युप = स्थे । न । वृकस्य । लोम । मुखे । श्मश्रूणि । न । व्याघ्रलोमेति व्याघ्र = लोम ✱। केशा : । न । शीर्षन् । यशसे । श्रियै । शिखा । सिꣳहस्य । लोम । त्विषि : । इन्द्रियाणि ✱।।१३।। अङ्गानि । आत्मन् । भिषजा । तत् । अश्विना । आत्मानम् । अङ्गै : । सम् । अधात् । सरस्वती ✱। इन्द्रस्य । रूपम् । शतमान मिति शत = मानम् । आयु : । चन्द्रेण । ज्योति : । अमृतम् । दधाना : ✱।।१४।। सरस्वती । योन्याम् । गर्भम् । अन्त : । अश्विभ्या मित्यश्वि = भ्याम् । पत्नी । सुकृत मिति सु = कृतम् । बिभर्ति ✱। अपाम् । रसेन । वरुण : । न । साम्ना । इन्द्रम् । श्रियै । जनयन् । अप्स्वित्यप् = सु । राजा ✱।।१५।। तेज : । पशूनाम् । हवि : । (इन्द्रियावत् । इन्द्रियव दितीन्द्रिय = वत् )। परिस्रुतेति परि = स्रुता । पयसा । सारघम् । मधु ✱। अश्विभ्या मित्यश्वि = भ्याम् । दुग्धम् । भिषजा । सरस्वत्या । सुतासुताभ्याम् । अमृत : । सोम : । इन्दु : ✱।।१६।।६।।२८१-०=२८१।।

क्षत्रस्य । नाभि : । असि । क्षत्रस्य । योनि : । असि । मा । त्वा । हिꣳसीत् । मा । मा । हिꣳसी : ✱। नि । ससाद । धृतव्रत इति धृत = व्रत : । वरुण : । पस्त्यासु । आ ✱। साम्राज्यायेति सां = राज्याय । सुक्रतु रिति सु = क्रतु : ✱। मृत्यो : । पाहि । विद्यो दिति वि = द्योत् । पाहि । देवस्य । त्वा । सवितु : । प्रसव इति प्र = सवे । अश्विनो : । बाहुभ्या मिति बाहु = भ्याम् । पूष्ण : । हस्ताभ्याम् ।।१।।

| | |
|---|---|
| 21.94.a | अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभि षिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभि षिञ्चामि । |
| 21.94.b | इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभि षिञ्चामि ॥२॥ |
| 21.95.a | कोऽसि कतमोऽसि कस्मै त्वा काय त्वा । |
| 21.95.b | सुश्लोक सुमङ्गल सत्यराजन् ॥३॥ |
| 21.96.a | शिरो मे श्रीर्यशो मुखं त्विषि : केशाश्च श्मश्रूणि । |
| 21.96.b | राजा मे प्राणो अमृतꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ॥४॥ |
| 21.97.a | जिह्वा मे भद्रँ वाङ् महो मनो मन्यु : स्वराड् भाम : । |
| 21.97.b | मोदा : प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सह : ॥५॥ |
| 21.98.a | बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म वीर्यम् । |
| 21.98.b | आत्मा क्षत्रमुरो मम ॥६॥ |
| 21.99.a | पृष्टीर्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणी । |
| 21.99.b | ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वत : ॥७॥ |
| 21.100.a | नाभिर्मे चित्तँ विज्ञानम् पायुर्मेऽपचितिर्भसत् । |
| 21.100.b | आनन्दनन्दा आण्डौ मे भग : सौभाग्यं पस : ॥८॥ |
| 21.101.a | जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठित : । |
| 21.101.b | प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु ॥९॥ |

अश्विनो : । भैषज्येन । तेजसे । ब्रह्मवर्चसायेति ब्रह्म = वर्चसाय । अभि । सिञ्चामि । सरस्वत्यै । भैषज्येन । वीर्याय । अन्नाद्यायेत्यन्न = अद्याय । अभि । सिञ्चामि । इन्द्रस्य । इन्द्रियेण । बलाय । श्रियै । यशसे । अभि । सिञ्चामि ।।२।। क : । असि । कतम : । असि । कस्मै । त्वा । काय । त्वा ✱। सुश्लोकेति सु = श्लोक । सुमङ्गलेति सु = मङ्गल । सत्यराज न्निति सत्य = राजन् ✱।।३।। शिर : । मे । श्री : । यश : । मुखम् । त्विषि : । केशा : । च । श्मश्रूणि ✱। राजा । मे । प्राण : । अमृतम् । सम्राळिति सं = राट् । चक्षु : । विराळिति वि = राट् । श्रोत्रम् ✱।।४।। जिह्वा । मे । भद्रम् । वाक् । मह : । मन : । मन्यु : । स्वराळिति स्व = राट् । भाम : ✱। मोदा : । प्रमोदा इति प्र = मोदा : । अङ्गुली : । अङ्गानि । मित्रम् । मे । सह : ✱।।५।। बाहू इति बाहू । मे । बलम् । इन्द्रियम् । हस्तौ । मे । कर्म । वीर्यम् ✱। आत्मा । क्षत्रम् । उर : । मम ✱।।६।। पृष्टी : । मे । राष्ट्रम् । उदरम् । अ९सौ । ग्रीवा : । च । श्रोणी इति श्रोणी ✱। ऊरू इत्यूरू । अरत्नी इत्यरत्नी । जानुनी इति जानुनी । विश : । मे । अङ्गानि । सर्वत : ✱।।७।। नाभि : । मे । चित्तम् । विज्ञान मिति वि = ज्ञानम् । पायु : । मे । अपचिति रित्यप = चिति : । भसत् ✱। आनन्दनन्दौ । आण्डौ । मे । भग : । सौभाग्यम् । पस : ✱।।८।। जङ्घाभ्याम् । पद्भ्यामिति पत् = भ्याम् । धर्म : । अस्मि । विशि । राजा । (प्रतिष्ठित : । प्रतिस्थित इति प्रति = स्थित : )✱। प्रति । क्षत्रे । प्रति । तिष्ठामि । राष्ट्रे । प्रति । अश्वेषु । प्रति । तिष्ठामि । गोषु ✱।।९।।

| | |
|---|---|
| 21.102.a | प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन् प्रति प्राणेषु प्रति तिष्ठामि पुष्टे । |
| 21.102.b | प्रति द्यावापृथिव्यो : प्रति तिष्ठामि यज्ञे ।।१०।। |
| 21.103.a | त्रया देवा एकादश त्रयस्त्रिꣳशा : सुराधस : । |
| 21.103.b | बृहस्पतिपुरोहिता देवस्य सवितु : सवे । |
| 21.103.c | देवा देवैरवन्तु मा ।।११।। |
| 21.104.a | प्रथमा द्वितीयै द्विंतीया स्तृतीयै स्तृतीया : सत्येन । |
| 21.104.b | सत्यँ य्यज्ञन यज्ञो यजुर्भि र्यजूꣳषि सामभि : ।।१२।। |
| 21.105.a | सामान्यृग्भि र्ऋच : पुरोऽनुवाक्याभि : पुरोऽनुवाक्या याज्याभि र्याज्या वषट्कारै : । |
| 21.105.b | वषट्कारा आहुतिभि राहुतयो मे कामान्त्समर्धयन्तु भू : स्वाहा ।।१३।। |
| 21.106.a | लोमानि प्रयतिर्मम त्वङ् म आनतिरागति : । |
| 21.106.b | माꣳसं म उपनतिर्वस्वस्थि मज्जा म आनति : ।।१४।।(७) |

स्वाद्वीं त्वैकादश ।।११।। देवा यज्ञं विंशति : ।।२०।। सुरावन्तमेकोनविंशति : ।।१९।। उदीरतामेकविंशति : ।।२१।। सोमो राजा पञ्च ।।५।। सीसेन तन्त्रं षोळश ।।१६।। क्षत्रस्य नाभिश्चतुर्दश ।।१४।। सप्तानुवाकेषु षळुत्तरशतम् ।।१०६।।

## ।। इति शुक्लयजु : काण्वसंहितायां एकविंशोऽध्याय : ।।२१।।

प्रति । अङ्गेषु । प्रति । तिष्ठामि । आत्मन् । प्रति । प्राणेषु । प्रति । तिष्ठामि । पुष्टे *। प्रति । द्यावापृथिव्यो : । प्रति । तिष्ठामि । यज्ञे *।।१०।। त्रया : । देवा : । एकादश । त्रयस्त्रिᳬशा इति त्रय : = त्रिᳬशा : । सुराधस इति सु = राधस : *। बृहस्पति पुरोहिता इति बृहस्पति = पुरोहिता : । देवस्य । सवितु : । सवे *। देवा : । देवै : । अवन्तु । मा *।।११।। प्रथमा : । द्वितीयै : । द्वितीया : । तृतीयै : । तृतीया : । सत्येन । सत्यम् । यज्ञेन । यज्ञ : । यजूर्भि रिति यजु : = भि : । यजूᳬषि । सामभि रिति साम = भि : ।।१२।। सामानि । ऋग्भिरित्यृक् = भि : । ऋच : । पुरोऽनुवाक्याभि रिति पुर : = अनुवाक्याभि : । पुरोऽनुवाक्या इति पुर : = अनुवाक्या : । याज्याभि : । याज्या : । वषट्कारै रिति वषट् = कारै : । वषट्कारा इति वषट् = कारा : । आहुतिभि रित्याहुति = भि : । आहुतय इत्या = हुतय : । मे । कामान् । सम् । अर्धयन्तु । भू : । स्वाहा *।।१३।। लोमानि । प्रयति रिति प्र = यति : । मम । त्वक् । मे । आनति रित्या = नति : । आगति रित्या = गति : *। माᳬसम् । मे । उपनति रित्युप = नति : । वसु । अस्थि । मज्जा । मे । आनति रित्या = नति : *।।१४।।७।।२२५-३१=१९४।। आहत्य पद संख्या ।।१७६०-२०७= १५५३।।

## इति एकविंशोऽध्याय :

# ।। इति एकविंशोऽध्याय : ।।

| Adhyaya | 21 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 229 | 73 | 156 |
| 2 | 228 | 0 | 228 |
| 3 | 259 | 19 | 240 |
| 4 | 369 | 0 | 369 |
| 5 | 169 | 84 | 85 |
| 6 | 281 | 0 | 281 |
| 7 | 225 | 31 | 194 |
| Total | 1760 | 207 | 1553 |

# ।। द्वाविंशोऽध्याय : ।।

| | |
|---|---|
| 22.1.a | यद्देवा देवहेळनं देवासश्चकृमा वयम् । |
| 22.1.b | अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहस : ।।१।। |
| 22.2.a | यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् । |
| 22.2.b | वायुर्मा तस्मा देनसो विश्वान्मुञ्चत्वꣳहस : ।।२।। |
| 22.3.a | यदि जाग्रद्यदि स्वप्न एनाꣳसि चकृमा वयम् । |
| 22.3.b | सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहस : ।।३।। |
| 22.4.a | यद् ग्रामे यदरण्ये यत्सभायाँ य्यदिन्द्रिये । |
| 22.4.b | यच्छूद्रे यदर्ये यदेनश्चकृमा वयम् । |
| 22.4.c | यदेकस्याधि धर्मणि तस्या वयजनमसि । |
| 22.4.d | यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च । |
| 22.4.e | अवभृथ निचुम्पुण निचेरुरसि निचुम्पुण । |
| 22.4.f | अव देवै र्देवकृत मेनोऽयक्ष्यव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि । |
| 22.4.g | समुद्रे ते हृदयमप्स्वन्त : सं त्वा विशन्त्वोषधी रुताप : । |
| 22.4.h | सुमित्रिया न आप ओषधय : सन्तु दुर्मित्रियास्तस्मै सन्तु । |
| 22.4.i | योऽस्मान् द्वेष्टि यं च वयं द्विष्म : ।।४।। |
| 22.5.a | द्रुपदादिव मुमुचान : स्विन्न : स्नातो मलादिव । |

# अथ द्वाविंशोऽध्याय :

ॐ यत् । देवा : । देवहेळन मिति देव = हेळनम् । देवास : । चकृम । वयम्
*। अग्नि : । मा । तस्मात् । एनस : । विश्वात् । मुञ्चतु । अꣳहस : *।।१।।
यदि । दिवा । यदि । नक्तम् । एनाꣳसि । चकृम । वयम् *। वायु : । मा ।
तस्मात् । एनस : । विश्वात् । मुञ्चतु । अꣳहस : *।।२।। यदि । जाग्रत् । यदि
। स्वप्ने । एनाꣳसि । चकृम । वयम् *। सूर्य : । मा । तस्मात् । एनस : ।
विश्वात् । मुञ्चतु । अꣳहस : *।।३।। यत् । ग्रामे । यत् । अरण्ये । यत् ।
सभायाम् । यत् । इन्द्रिये । यत् । शूद्रे । यत् । अर्ये । यत् । एन : । चकृम ।
वयम् । यत् । एकस्य । अधि । धर्मणि । तस्य । अवयजन मित्यव = यजनम् ।
असि *। यत् । आप : । अघ्न्या : । इति । वरुण । इति । शपामहे । तत : ।
वरुण । न : । मुञ्च । अवभृथेत्यव = भृथ । निचुंपुणेति नि = चुंपुण ।
निचेरुरिति नि = चेरु : । असि । निचुंपुणेतिनि = चुंपुण । अव । देवै : ।
देवकृत मिति देव = कृतम् । एन : । अयक्षि *। अव । मर्त्यै : । मर्त्यकृत
मिति मर्त्य = कृतम् । पुरुराव्ण इति पुरु = राव्ण : । देव । रिष : । पाहि *।
समुद्रे । ते । हृदयम् । अप्स्वि त्यप् = सु । अन्त रित्यन्त : । सम् । त्वा ।
विशन्तु । ओषधी : । उत । आप : *। सुमित्रिया इति सु = मित्रिया : । न :
। आप : । ओषधय : । सन्तु । दुर्मित्रिया इति दु : = मित्रिया : । तस्मै ।
सन्तु । य : । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्म : *।।४।।
द्रुपदादिवेति द्रुपदात् = इव । मुमुचान : । स्विन्न : । स्नात : । मलादिवेति
मलात् = इव *।

| | |
|---|---|
| 22.5.b | पूतं पवित्रेणेवाज्यमाप : शुन्धन्तु मैनस : ।।५।। |
| 22.6.a | उद्वयं तमसस्परि स्व : पश्यन्त उत्तरम् । |
| 22.6.b | देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।।६।। |
| 22.7.a | अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि । |
| 22.7.b | पयस्वानग्न आऽगमं तं मा सꣳ सृज वर्चसा प्रजया च धनेन च । |
| 22.7.c | एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि ।।७।। |
| 22.8.a | समाववर्ति पृथिवी समुषा : समु सूर्य : । |
| 22.8.b | समु विश्वमिदं जगत् । |
| 22.8.c | वैश्वानरज्योतिर्भूयासँ विभून्कामान्व्यश्नवै भू : स्वाहा ।।८।।(१) |

| | |
|---|---|
| 22.9.a | अभ्या दधामि समिधमग्ने व्रतपते त्वयि । |
| 22.9.b | व्रतं च श्रद्धां चोपैमीन्धे त्वा दीक्षितो अहम् ।।१।। |
| 22.10.a | यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरत : सह । |
| 22.10.b | तँ लोकं पुण्यं प्रज्ञेषँ य्यत्र देवा : सहाग्निना ।।२।। |
| 22.11.a | यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरत : सह । |
| 22.11.b | तँ लोकं पुण्यं प्रज्ञेषँ य्यत्र सेदिर्न विद्यते ।।३।। |
| 22.12.a | अꣳशुना ते अꣳशु : पृच्यतां परुषा परु : । |
| 22.12.b | गन्धस्ते सोममवतु मदाय रसो अच्युत : ।।४।। |

पूतम् । पवित्रेणेवेति पवित्रेण = इव । आज्यम् । आप : । शुन्धन्तु । मा । एनस
: ✱।।५।। उत् । वयम् । तमस : । परि । स्वरिति स्व : । पश्यन्त : । उत्तर
मित्युत् = तरम् ✱। देवम् । देवत्रेति देव = त्रा । सूर्यम् । अगन्म । ज्योति : ।
उत्तममित्युत् = तमम् ✱।।६।। अप : । अद्य । अनु । अचारिषम् । रसेन । सम्
। असृक्ष्महि ✱। पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज ।
वर्चसा । प्रजयेतिप्र = जया । च । धनेन । च ✱। एध : । असि । एधिषीमहि
। समिदिति सं = इत् । असि । तेज : । असि । तेज : । मयि । धेहि ✱।।७।।
समाववर्तीतिसं = आववर्ति । पृथिवी । सम् । उषा : । सम् । ॐ इत्यूँ । सूर्य :
✱। सम् । ॐ इत्यूँ । विश्वम् । इदम् । जगत् ✱। वैश्वानरज्योति रिति वैश्वानर =
ज्योति : । भूयासम् । विभूनिति वि = भून् । कामान् । वि । अश्नवै । भू : ।
स्वाहा ✱।।८।।१।।१९३-६५=१२८।।

अभि । आ । दधामि । समिध मिति सं = इधम् । अग्ने । व्रतपत इति व्रत =
पते । त्वयि ✱। व्रतम् । च । श्रद्धाम् । च । उप । एमि । इन्धे । त्वा । दीक्षित
: । अहम् ✱।।१।। यत्र । ब्रह्म । च । क्षत्रम् । च । सम्यञ्चौ । चरत : । सह
✱। तम् । लोकम् । पुण्यम् । प्र । ज्ञेषम् । यत्र । देवा : । सह । अग्निना
✱।।२।। यत्र । इन्द्र : । च । वायु : । च । सम्यञ्चौ । चरत : । सह ✱। तम्
। लोकम् । पुण्यम् । प्र । ज्ञेषम् । यत्र । सेदि : । न । विद्यते ✱।।३।।
अꣳशुना । ते । अꣳशु : । पृच्यताम् । परुषा । परु : ✱। गन्ध : । ते ।
सोमम् । अवतु । मदाय । रस : । अच्युत : ✱।।४।।

| | |
|---|---|
| 22.13.a | सिञ्चन्ति परिषिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च । |
| 22.13.b | सुरायै बभ्र्वै मदे किन्त्वो वदति किन्त्व : ॥५॥ |
| 22.14.a | धानावन्तं करम्भिणमपूपवन्त मुक्थिनम् । |
| 22.14.b | इन्द्र प्रापर्जुषस्व न : ॥६॥ |
| 22.15.a | बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् । |
| 22.15.b | येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥७॥ |
| 22.16.a | अध्वर्यो अद्रिभि : सुतꣳ सोमम् पवित्र आ नय । |
| 22.16.b | पुनीहीन्द्राय पातवे ॥८॥(२) |

| | |
|---|---|
| 22.17.a | यो भूतानामधिपति र्यस्मिँ ल्लोका अधि श्रिता : । |
| 22.17.b | य ईशे महतो महाꣳस्तेन गृह्णामि त्वामहं मयि गृह्णामि त्वामहम् ॥१॥ |
| 22.18.a | उपयामगृहीतोऽस्यश्विभ्या न्त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे । |
| 22.18.b | एष ते योनिरश्विभ्या न्त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥२॥ |
| 22.19.a | प्राणपा मे अपानपाश्चक्षुष्पा : श्रोत्रपाश्च मे । |
| 22.19.b | वाचो मे विश्वभेषजो मनसोऽसि विलायक : ॥३॥ |
| 22.20.a | अश्विनकृतस्य ते सरस्वतिकृतस्येन्द्रेण सुत्राम्णा कृतस्य । |
| 22.20.b | उपहूत उपहूतस्य भक्षयामि ॥४॥(३) |

सिञ्चन्ति । परि । सिञ्चन्ति । उत् । सिञ्चन्ति । पुनन्ति । च ✱। सुरायै । बभ्रवै । मदे । किन्त्व : । वदति । किन्त्व : ✱।।५।। धानावन्त मिति धाना = वन्तम् । करंभिणम् । अपूपवन्त मित्यपूप = वन्तम् । उक्थिनम् ✱। इन्द्र । प्रात : । जुषस्व । न : ✱।।६।। बृहत् । इन्द्राय । गायत । मरुत : । वृत्रहन्तम मिति वृत्रहन् = तमम् ✱। येन । ज्योति : । अजनयन् । (ऋतावृध : । ऋतवृध इत्यृत = वृध : )। देवम् । देवाय । जागृवि ✱।।७।। अध्वर्यो इत्यध्वर्यो । अद्रिभि रित्यद्रि = भि : । सुतम् । सोमम् । पवित्रे । आ । नय ✱। पुनीहि । इन्द्राय । पातवे ✱।।८।।२।।१०७-०=१०७।।

य : । भूतानाम् । अधिपति रित्यधि = पति : । यस्मिन् । लोका : । अधि । श्रिता : ✱। य : । ईशे । महत : । महान् । तेन । गृण्हामि । त्वाम् । अहम् । मयि । गृण्हामि । त्वाम् । अहम् ✱।।१।। उपयामगृहीत इत्युपयाम = गृहीत : । असि । अश्विभ्या मित्यश्वि = भ्याम् । त्वा । सरस्वत्यै । त्वा । इन्द्राय । त्वा । सुत्राम्ण इति सु = त्राम्णे ✱। एष : । ते । योनि : ।अश्विभ्या मित्यश्वि = भ्याम् । त्वा । सरस्वत्यै । त्वा । इन्द्राय । त्वा । सुत्राम्ण इति सु = त्राम्णे ✱।।२।। प्राणपा इति प्राण = पा : । मे । अपानपा इत्यपान = पा : ।(चक्षुष्पा : । चक्षु : पा इति चक्षु : = पा : )। श्रोत्रपा इति श्रोत्र = पा : । च । मे ✱। वाच : । मे । विश्वभेषज इति विश्व = भेषज : । मनस : । असि । विलायक इति वि = लायक : ✱।।३।। अश्विनकृतस्ये त्यश्विन = कृतस्य । ते । सरस्वतिकृतस्येति सरस्वति = कृतस्य । इन्द्रेण । सुत्राम्णेति सु = त्राम्णा । कृतस्य ✱। उपहूत इत्युप = हूत : । उपहूतस्येत्युप = हूतस्य । भक्षयामि ✱।।४।।३।।६०-१९=४१।।

| | |
|---|---|
| 22.21.a | समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधान : । |
| 22.21.b | त्रिभि र्देवैस्त्रिꣳशता वज्रबाहुर्जघान वृत्रँ वि दुरो ववार ।।१।। |
| 22.22.a | नराशꣳस : प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम । |
| 22.22.b | गोभिर्वपावान्मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेता : ।।२।। |
| 22.23.a | ईळितो देवै र्हरिवाँ (२) - अभिष्टिराजुह्वानो हविषा शर्धमान : । |
| 22.23.b | पुरन्दरो गोत्रभिद्वज्रबाहुरा यातु यज्ञमुप नो जुषाण : ।।३।। |
| 22.24.a | जुषाणो बर्हिर्हरिवान्न इन्द्र : प्राचीनꣳ सीदत्प्रदिशा पृथिव्या : । |
| 22.24.b | अरुप्रथा : प्रथमानꣳ स्योनमादित्यैरक्तँ वसुभि : सजोषा : ।।४।। |
| 22.25.a | इन्द्रं दुर : कवष्यो धावमाना वृषाणँ य्यन्तु जनय : सुपत्नी : । |
| 22.25.b | द्वारो देवी रभितो वि श्रयन्ताꣳ सुवीरा वीरं प्रथमाना महोभि : ।।५।। |
| 22.26.a | उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् । |
| 22.26.b | तन्तु न्ततं पेशसा सँवयन्ती देवाना न्देवँ य्यजत : सुरुक्मे ।।६।। |

समिद्ध इति सं = इद्ध : । इन्द्र : । उषसाम् । अनीके । पुरोरुचेति पुर : = रुचा । पूर्वकृदिति पूर्व = कृत् । (वावृधान : । ववृधान इति ववृधान :) ✱। त्रिभिरिति त्रि = भि : । देवै : । त्रिꣳशता । वज्रबाहु रिति वज्र = बाहु : । जघान । वृत्रम् । वि । दुर : । ववार ✱।।१।। नराशꣳस : । प्रति । शूर : । मिमान : । तनूनपा दिति तनू = नपात् । प्रति । यज्ञस्य । धाम ✱। गोभि : । वपावा निति वपा = वान् । मधुना । समञ्जन्निति सं = अञ्जन् । हिरण्यै : । चन्द्री । यजति । प्रचेता इति प्र = चेता : ✱।।२।। ईळित : । देवै : । हरिवा निति हरि = वान् । अभिष्टि : । आजुह्वान इत्या = जुह्वान : । हविषा । शर्धमान : ✱। पुरन्दर इति पुरं = दर : । गोत्रभिदिति गोत्र = भित् । वज्रबाहु रिति वज्र = बाहु : । आ । यातु । यज्ञम् । उप । न : । जुषाण : ✱।।३।। जुषाण : । बर्हि : । हरिवा निति हरि = वान् । न : । इन्द्र : । प्राचीनम् । सीदत् । प्रदिशेति प्र = दिशा । पृथिव्या : ✱। उरुप्रथा इत्युरु = प्रथा : । प्रथमानम् । स्योनम् । आदित्यै : । अक्तम् । वसुभि रिति वसु = भि : । सजोषा इति स = जोषा : ✱।।४।। इन्द्रम् । दुर : । कवष्य : । धावमाना : । वृषाणम् । यन्तु । जनय : । सुपत्नी रिति सु = पत्नी : ✱। द्वार : । देवी : । अभित : । वि । श्रयन्ताम् । सुवीरा इति सु = वीरा : । वीरम् । प्रथमाना : । महोभि रिति मह : = भि : ✱।।५।। (उषासानक्ता । उषसानक्ते त्युषसा नक्ता )। बृहती इति बृहती । बृहन्तम् । पयस्वती इति पयस्वती । सुदुघे इति सु = दुघे । शूरम् । इन्द्रम् ✱। तन्तुम् । ततम् । पेशसा । सँवयन्ती इति सं = वयन्ती । देवानाम् । देवम् । यजत : । सुरुक्मे इति सु = रुक्मे ✱।।६।।

| | |
|---|---|
| 22.27.a | दैव्या मिमाना मनुष : पुरुत्रा होतारा इन्द्रम् प्रथमा सुवाचा । |
| 22.27.b | मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधात : ।।७।। |
| 22.28.a | तिस्रो देवी र्हविषा वर्धमाना इन्द्र ञ्जुषाणा जनयो न पत्नी : । |
| 22.28.b | अच्छिन्नं तन्तुं पयसा सरस्वतीळा देवी भारती विश्वतूर्ति : ।।८।। |
| 22.29.a | त्वाष्टा दधच्छुष्ममिन्द्राय वृष्णेऽपाकोऽचिष्टुर्यशसे पुरूणि । |
| 22.29.b | वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ।।९।। |
| 22.30.a | वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देव : । |
| 22.30.b | इन्द्रस्य हव्यैर्जठरम् पृणान : स्वदाति यज्ञं मधुना घृतेन ।।१०।। |
| 22.31.a | स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् । |
| 22.31.b | घृतप्रुषा मनसा मोदमाना : स्वाहा देवा अमृतामादयन्ताम् ।।११।।(४) |

| | |
|---|---|
| 22.32.a | आ यात्विन्द्रोऽवस उप न इह स्तुत : सधमादस्तु शूर : । |
| 22.32.b | वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ।।१।। |
| 22.33.a | आ न इन्द्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्र : । |
| 22.33.b | ओजिष्ठेभि र्नृपतिर्वज्रबाहु : सङ्गे समत्सु तुर्वणि : पृतन्यून् ।।२।। |

दैव्या । मिमाना । मनुष : । पुरुत्रेति पुरु = त्रा । होतारौ । इन्द्रम् । प्रथमा । सुवाचेति सु = वाचा ✱। मूर्धन् । यज्ञस्य । मधुना । दधाना । प्राचीनम् । ज्योति : । हविषा । वृधात : ✱।।७।। तिस्र : । देवी : । हविषा । वर्धमाना : । इन्द्रम् । जुषाणा :। जनय :। न । पत्नी : ✱। अच्छिन्नम् । तन्तुम् । पयसा । सरस्वती । इळा । देवी । भारती । विश्वतूर्ति रिति विश्व = तूर्ति : ✱।।८।। त्वष्टा । दधत् । शुष्मम् । इन्द्राय । वृष्णे । अपाक : । अचिष्टु : । यशसे । पुरूणि ✱। वृषा । यजन् । वृषणम् । भूरिरेता इति भूरि = रेता : । मूर्धन् । यज्ञस्य । सम् । अनक्तु । देवान् ✱।।९।। वनस्पति : । अवसृष्ट इत्यव = सृष्टः । न । पाशै : । त्मन्या । समञ्जन्निति सं = अञ्जन् । शमिता । न । देव : ✱। इन्द्रस्य । हव्यै : । जठरम् । पृणान : । स्वदाति । यज्ञम् । मधुना । घृतेन ✱।।१०।। स्तोकानाम् । इन्दुम् । प्रति । शूर : । इन्द्र : । ( वृषायमाण : । वृषयमाण इति वृष = यमाण : )। वृषभ : । तुराषाट् ✱। घृतप्रुषेति घृत = प्रुषा । मनसा । मोदमाना : । स्वाहा । देवा : । अमृता : । मादयन्ताम् ✱।।११।। ४।।१७९-०=१७९।।

आ । यातु । इन्द्र : । अवसे । उप । न : । इह । स्तुत : । सधमादिति सध = मात् । अस्तु । शूर : ✱। (वावृधान : । ववृधान इति ववृधान : )। तविषी : । यस्य । पूर्वी : । द्यौ : । न । क्षत्रम् । अभिभूतीत्यभि = भूति । पुष्यात् ✱।।१।। आ । न : । इन्द्र : । दूरात् । आ । न : । आसात् । अभिष्टिकृदित्यभिष्टि = कृत् । अवसे । यासत् । उग्र : ✱। ओजिष्ठेभि : । नृपति रिति नृ = पति : । वज्रबाहु रिति वज्र = बाहु : । सङ्ग इति सं = गे । समत्स्विति समत् = सु । तुर्वणि : । पृतन्यून् ✱।।२।।

| | |
|---|---|
| 22.34.a | आ न इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च । |
| 22.34.b | तिष्ठाति वज्री मघवा विरप्शीमँ य्यज्ञमनु नो वाजसातौ ॥३॥ |
| 22.35.a | त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । |
| 22.35.b | ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्र : ॥४॥ |
| 22.36.a | इन्द्र : सुत्रामा स्ववाँ (२) - अवोभि : समृळीको भवतु विश्ववेदा : । |
| 22.36.b | बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतय : स्याम ॥५॥ |
| 22.37.a | तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम । |
| 22.37.b | स सुत्रामा स्ववाँ (२) -इन्द्रो अस्मे आराच्चिद् द्वेष : सनुतर्युयोतु ॥६॥ |
| 22.38.a | आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभि : । |
| 22.38.b | मा त्वा के चिन्नि यमन्वि न्न पाशिनोऽति धन्वेव ताँ (२)- इहि॥७॥ |
| 22.39.a | एवेदिन्द्रँ वृषणँ वज्रबाहुँ वसिष्ठासो अभ्यर्चन्त्यर्कै : । |
| 22.39.b | स न स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभि : सदा न : ॥८॥(५) |

आ । न : । इन्द्र : । हरिभि रिति हरि = भि : । यातु । अच्छ । अर्वाचीन : । अवसे । राधसे । च ✱। तिष्ठाति । वज्री । मघवेति मघ = वा । विरप्शीति वि = रप्शी । इमम् । यज्ञम् । अनु । न : । वाजसाता इति वाज = सातौ ✱।।३।। त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेहव इति हवे = हवे । सुहव मिति सु = हवम् । शूरम् । इन्द्रम् ✱। ह्वयामि । शक्रम् । पुरुहूतमिति पुरु = हूतम् । इन्द्रम् । स्वस्ति । न : । मघवेति मघ = वा । धातु । इन्द्र : ✱।।४।। इन्द्र : । सुत्रामेति सु = त्रामा । स्ववा निति स्व = वान् । अवोभि रित्यव : = भि : । सुमृळीक इति सु = मृळीक : । भवतु । विश्ववेदा इति विश्व = वेदा : ✱। बाधताम् । द्वेष : । अभयम् । कृणोतु । सुवीर्यस्वेति सु = वीर्यस्य । पतय : । स्याम ✱।।५।। तस्य । वयम् । सुमता इति सु = मतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ✱। स : । सुत्रामेति सु = त्रामा । स्ववा निति स्व = वान् । इन्द्र : । अस्मे इत्यस्मे । आरात् । चित् । द्वेष : । सनुत : । युयोतु ✱।।६।। आ । मन्द्रै : । इन्द्र । हरिभि रिति हरि = भि : । याहि । मयूररोमभि रिति मयूररोम = भि : ✱। मा । त्वा । के । चित् । नि । यमन् । विम् । न । पाशिन : । अति । धन्वे वेति धन्व = इव । तान् । इहि ✱।।७।। एव । इत् । इन्द्रम् । वृषणम् । वज्रबाहु मिति वज्र = बाहुम् । वसिष्ठास : । अभि । अर्चन्ति । अर्कै : ✱। स : । न : । स्तुत : । वीर वदिति वीर = वत् । धातु । गोम दिति गो = मत् । यूयम् । पात । स्वस्तिभि रिति स्वस्ति = भि : । सदा । न : ✱।।८।।५।।१४५-०=१४५।।

| | |
|---|---|
| 22.40.a | समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुत : । |
| 22.40.b | दुहे धेनु : सरस्वती सोमꣳ शुक्र मिहेन्द्रियम् ॥१॥ |
| 22.41.a | तनूपा भिषजा सुतेऽश्विनोभा सरस्वती । |
| 22.41.b | मध्वा रजाꣳसीन्द्रियमिन्द्राय पथिभिर्वहान् ॥२॥ |
| 22.42.a | इन्द्रायेन्दुꣳ सरस्वती नराशꣳसेन नग्नहुम् । |
| 22.42.b | अधातामश्विना मधु भेषजं भिषजा सुते ॥३॥ |
| 22.43.a | आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् । |
| 22.43.b | इळाभिरश्विना इषꣳ समूर्जꣳ सꣳ रयि न्दधु : ॥४॥ |
| 22.44.a | अश्विना नमुचे : सुतꣳ सोमꣳ शुक्रं परिस्रुता । |
| 22.44.b | सरस्वती तमाऽभरद् बर्हिषेन्द्राय पातवे ॥५॥ |
| 22.45.a | कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिश : । |
| 22.45.b | इन्द्रो न रोदसी उभे दुहे कामान्त्सरस्वती ॥६॥ |
| 22.46.a | उषासानक्तमश्विना दिवेन्द्रꣳ सायमिन्द्रियै : । |
| 22.46.b | सञ्जानाने सुपेशसा समञ्जाते सरस्वत्या ॥७॥ |
| 22.47.a | पातं नो अश्विना दिवा पाहि नक्तꣳ सरस्वति । |
| 22.47.b | दैव्या होतारा भिषजा पातमिन्द्रꣳ सचा सुते ॥८॥ |
| 22.48.a | तिस्रस्त्रेधा सरस्वत्यश्विना भारतीळा । |

समिद्ध इति सं = इद्ध : । अग्नि : । अश्विना । तप्त : । घर्म : । विराळिति वि = राट् । सुत : ✱। दुहे । धेनु : । सरस्वती । सोमम् । शुक्रम् । इह । इन्द्रियम् ✱।।१।। तनूपेति तनू = पा । भिषजा । सुते । अश्विना । उभा । सरस्वती ✱। मध्वा । रजाꣳसि । इन्द्रियम् । इन्द्राय । पथिभि रिति पथि = भि : । वहान् ✱।।२।। इन्द्राय । इन्दुम् । सरस्वती । नराशꣳसेन । नग्नहुम् ✱। अधाताम् । अश्विना । मधु । भेषजम् । भिषजा । सुते ✱।।३।। आजुह्वानेत्या = जुह्वाना । सरस्वती । इन्द्राय । इन्द्रियाणि । वीर्यम् ✱। इळाभि : । अश्विनौ । इषम् । सम् । ऊर्जम् । सम् । रयिम् । दधु : ✱।।४।। अश्विना । नमुचे : । सुतम् । सोमम् । शुक्रम् । परिस्रुतेति परि = स्रुता ✱। सरस्वती । तम् । आ । अभरत् । बर्हिषा । इन्द्राय । पातवे ✱।।५।। कवष्य : । न । व्यचस्वती : । अश्विभ्या मित्यश्वि = भ्याम् । न । दुर : । दिश : ✱। इन्द्र : । न । रोदसी इति रोदसी । उभे इत्युभे । दुहे । कामान् । सरस्वती ✱।।६।। (उषासानक्तम् । उषसानक्त मित्युषसा नक्तम् )। अश्विना । दिवा । इन्द्रम् । सायम् । इन्द्रियै : ✱। सञ्जानाने इति सं = जानाने । सुपेशसेति सु = पेशसा । सम् । अञ्जाते इत्यञ्जाते । सरस्वत्या ✱।।७।। पातम् । न : । अश्विना । दिवा । पाहि । नक्तम् । सरस्वति ✱। दैव्या । होतारा । भिषजा । पातम् । इन्द्रम् । सचा । सुते ✱।।८।। तिस्र : । त्रेधा । सरस्वती । अश्विना । भारती । इळा ✱।

| | |
|---|---|
| 22.48.b | तीव्रं परिस्रुता सोममिन्द्राय सुषुवुर्मदम् ।।९।। |
| 22.49.a | अश्विना भेषजं मधु भेषजं न : सरस्वती । |
| 22.49.b | इन्द्रे त्वष्टा यश : श्रियꣳ रूपꣳ रूपमधु : सुते ।।१०।। |
| 22.50.a | ऋतुथेन्द्रो वनस्पति : शशमान : परिस्रुता । |
| 22.50.b | कीलालमश्विभ्यां मधु दुहे धेनु : सरस्वती ।।११।। |
| 22.51.a | गोभिर्न सोममश्विना मासरेण परिस्रुता । |
| 22.51.b | समधातꣳ सरस्वत्या स्वाहेन्द्रे सुतं मधु ।।१२।।(६) |

| | |
|---|---|
| 22.52.a | अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती । |
| 22.52.b | आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे ।।१।। |
| 22.53.a | यमश्विना सरस्वती हविषेन्द्रमवर्धयन् । |
| 22.53.b | स बिभेद वलं मघं नमुचा आसुरे सचा ।।२।। |
| 22.54.a | तमिन्द्रम् पशव : सचाऽश्विनोभा सरस्वती । |
| 22.54.b | दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियै : ।।३।। |
| 22.55.a | य इन्द्र इन्द्रियं दधु : सविता वरुणो भग : । |
| 22.55.b | स सुत्रामा हविष्पतिर्यजमानाय सश्चत ।।४।। |
| 22.56.a | सविता वरुणो दधद्यजमानाय दाशुषे । |
| 22.56.b | आऽदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ।।५।। |

तीव्रम् । परिस्रुतेति परि = स्रुता । सोमम् । इन्द्राय । (सुषुवु : । सुसुवु रिति सुसुवु : )। मदम् *।।९।। अश्विना । भेषजम् । मधु । भेषजम् । न : । सरस्वती *। इन्द्रे । त्वष्टा । यश : । श्रियम् । रूप॑रूप मिति रूपं = रूपम् । अधु : । सुते *।।१०।। ऋतुथेत्यृतु = था । इन्द्र : । वनस्पति : । शशमान : । परिस्रुतेति परि = स्रुता *। कीलालम् । अश्विभ्या मित्यश्वि = भ्याम् । मधु । दुहे । धेनु : । सरस्वती *।।११।। गोभि : । न । सोमम् । अश्विना । मासरेण । परिस्रुतेति परि = स्रुता *।। सम् । अधातम् । सरस्वत्या । स्वाहा । इन्द्रे । सुतम् । मधु *।।१२।।६।।१५१-०=१५१।।

अश्विना । हवि : । इन्द्रियम् । नमुचे : । धिया । सरस्वती *। आ । शुक्रम् । आसुरात् । वसु । मघम् । इन्द्राय । जभ्रिरे *।।१।। यम् । अश्विना । सरस्वती । हविषा । इन्द्रम् । अवर्धयन् *। स : । बिभेद । वलम् । मघम् । नमुचौ । आसुरे । सचा *।।२।। तम् । इन्द्रम् । पशव : । सचा । अश्विना । उभा । सरस्वती *। दधाना : । अभि । अनूषत । हविषा । यज्ञे । इन्द्रियै : *।।३।। ये । इन्द्रे । इन्द्रियम् । दधुः । सविता । वरुण : । भग : *। स : । सुत्रामेति सु = त्रामा । (हविष्पति : । हवि : पति रिति हवि : = पति : )। यजमानाय । सश्चत *।।४।। सविता । वरुण : । दधत् । यजमानाय । दाशुषे *। आ । अदत्त । नमुचे : । वसु । सुत्रामेति सु = त्रामा । बलम् । इन्द्रियम् *।।५।।

| | |
|---|---|
| 22.57.a | वरुण : क्षत्रमिन्द्रियं भगेन सविता श्रियम् । |
| 22.57.b | सुत्रामा यशसा बलं दधाना यज्ञमाशत ।।६।। |
| 22.58.a | अश्विना गोभिरिन्द्रियमश्वेभि र्वीर्यं बलम् । |
| 22.58.b | हविषेन्द्रꣳ सरस्वती यजमान मवर्धयन् ।।७।। |
| 22.59.a | ता नासत्या सुपेशसा हिरण्यवर्तनी नरा । |
| 22.59.b | सरस्वती हविष्मतीन्द्र कर्मसु नोऽवत ।।८।। |
| 22.60.a | ता भिषजा सुकर्मणा सा सुदुघा सरस्वती । |
| 22.60.b | स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ।।९।। |
| 22.61.a | युवꣳ सुराममश्विना नमुचा आसुरे सचा । |
| 22.61.b | विपिपाना : सरस्वतीन्द्रं कर्मस्वावत ।।१०।। |
| 22.62.a | पुत्रमिव पितरा अश्विनोभेन्द्रावथु : काव्यै र्दꣳसनाभि : । |
| 22.62.b | यत्सुरामँ व्यपिब : शचीभि : सरस्वती त्वा मघवन्नभिष्णक् ।।११।। |
| 22.63.a | यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुता : । |
| 22.63.b | कीलालपे सोमपृष्ठाय वेधसे हृदा मति ञ्जनय चारुमग्नये ।।१२।। |
| 22.64.a | अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोम : । |
| 22.64.b | वाजसनिꣳरयिमस्मे सुवीरम् प्रशस्तं धेहि यशसम् बृहन्तम् ।।१३।।(७) |

वरुण : । क्षत्रम् । इन्द्रियम् । भगेन । सविता । श्रियम् ✱। सुत्रामेति सु = त्रामा । यशसा । बलम् । दधाना : । यज्ञम् । आशत ✱।।६।। अश्विना । गोभि : । इन्द्रियम् । अश्वेभि : । वीर्यम् । बलम् ✱। हविषा । इन्द्रम् । सरस्वती । यजमानम् । अवर्धयन् ✱।।७।। ता । नासत्या । सुपेश सेति सु = पेशसा । हिरण्यवर्तनी इति हिरण्य = वर्तनी । नरा ✱। सरस्वती । हविष्मती । इन्द्र । कर्मस्विति कर्म = सु । न : । अवत ✱।।८।। ता । भिषजा । सुकर्मणेति सु = कर्मणा । सा । सुदुघेति सु = दुघा । सरस्वती ✱। स : । वृत्रहेति वृत्र = हा । शतक्रतु रिति शत = क्रतु : । इन्द्राय । दधु : । इन्द्रियम् ✱।।९।। युवम् । सुरामम् । अश्विना । नमुचौ । आसुरे । सचा ✱। विपिपाना इति वि = पिपाना : । सरस्वति । इन्द्रम् । कर्म स्विति कर्म = सु । आवत ✱।।१०।। पुत्रमिवेति पुत्रं = इव । पितरौ । अश्विना । उभा । इन्द्र । आवथु : । काव्यै : । दꣳसनाभि : ✱। यत् । सुरामम् । वि । अपिब : । शचीभि : । सरस्वती । त्वा । मघवन्निति मघ = वन् । अभिष्णक् ✱।।११।। यस्मिन् । अश्वास : । ऋषभास : । उक्षण : । वशा : । मेषा : । अवसृष्टास इत्यव = सृष्टास : । आहुता इत्या = हुता : ✱। कीलालप इति कीलाल = पे । सोमपृष्ठा येति सोम = पृष्ठाय । वेधसे । हृदा । मतिम् । जनय । चारुम् । अग्नये ✱।।१२।। अहावि । अग्ने । हवि : । आस्ये । ते । स्रुचीवेति स्रुचि = इव । घृतम् । चम्वीवेति चम्वी = इव । सोम : ✱। वाजसनि मिति वाज = सनिम् । रयिम् । अस्मे इत्यस्मे । सुवीर मिति सु = वीरम् । प्रशस्तमिति प्र = शस्तम् । धेहि । यशसम् । बृहन्तम् ✱।।१३।।७।। १७०-१७=१५३।।

| | |
|---|---|
| 22.65.a | अश्विना तेजसा चक्षु : प्राणेन सरस्वती वीर्यम् । |
| 22.65.b | वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम् ॥१॥ |
| 22.66.a | गोमदू षु णासत्याऽश्वावद्यातमश्विना । |
| 22.66.b | वर्ती रुद्रा नृपाय्यम् ॥२॥ |
| 22.67.a | न यत्परो नान्तर आदधर्षद् वृषण्वसू । |
| 22.67.b | दु : शꣳसो मर्त्यो रिपु : ॥३॥ |
| 22.68.a | ता न आ वोळ्हमश्विना रयिं पिशङ्गसन्दृशम् । |
| 22.68.b | धिष्ण्या वरिवोविदम् ॥४॥ |
| 22.69.a | पावका न : सरस्वती वाजेभि र्वाजिनीवती । |
| 22.69.b | यज्ञँ वष्टु धियावसु : ॥५॥ |
| 22.70.a | चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । |
| 22.70.b | यज्ञं दधे सरस्वती ॥६॥ |
| 22.71.a | महो अर्ण : सरस्वती प्र चेतयति केतुना । |
| 22.71.b | धियो विश्वा वि राजति ॥७॥ |
| 22.72.a | इन्द्रा याहि चित्रभानो सुता इमे त्वायव : । |
| 22.72.b | अण्वीभिस्तना पूतासः ॥८॥ |

अश्विना । तेजसा । चक्षु : । प्राणेन । सरस्वती । वीर्यम् ✱। वाचा । इन्द्र : । बलेन । इन्द्राय । दधु : । इन्द्रियम् ✱॥१॥ गोम दिति गो = मत् । ॐ इत्यूँ । सु । नासत्या । (अश्वावत् । अश्वव दित्यश्व = वत् )। यातम् । अश्विना ✱। वर्ति : । रुद्रा । नृपाय्य मिति नृ = पाय्यम् ✱॥२॥ न । यत् । पर : । न । अन्तर : । आदधर्ष दित्या = दधर्षत् । वृषण्वसू इति वृषण् = वसू ✱। दुश्शꣳस इति दु : = शꣳस : । मर्त्य : । रिपु : ✱॥३॥ ता । न : । आ । वोळ्हम् । अश्विना । रयिम् । पिशङ्गसन्दृश मिति पिशङ्ग = सन्दृशम् ✱। धिष्ण्या । वरिवोविद मिति वरिव : = विदम् ✱॥४॥ पावका । न : । स्सरस्वती । वाजेभि : । वाजिनी वतीति वाजिनी = वती ✱। यज्ञम् । वष्टु । धियावसु रिति धिया = वसु : ✱॥५॥ चोदयित्री । सूनृतानाम् । चेतन्ती । सुमतीना मिति सु = मतीनाम् ✱। यज्ञम् । दधे । सरस्वती ✱॥६॥ मह : । अर्ण : । सरस्वती । प्र । चेतयति । केतुना ✱। धिय : । विश्वा : । वि । राजति ✱॥७॥ इन्द्र । आ । याहि । चित्रभानो इति चित्र = भानो । सुता : । इमे । त्वायव इति त्वा = यव : ✱। अण्वीभि : । तना । पूतास : ✱ ॥८॥

| | |
|---|---|
| 22.73.a | इन्द्रा याहि धियेषितो विप्रजूत : सुतावत : । |
| 22.73.b | उप ब्रह्माणि वाघत : ॥९॥ |
| 22.74.a | इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिव : । |
| 22.74.b | सुते दधिष्व नश्चन : ॥१०॥ |
| 22.75.a | अश्विना पिबतां मधु सरस्वत्या सजोषसा । |
| 22.75.b | इन्द्र : सुत्रामा वृत्रहा जुषन्ताꣳ सोम्यं मधु ॥११॥(८) |

यद्देवा अष्ट ॥८॥ अभ्यादधामीत्यष्ट ॥८॥ यो भूतानां चतस्र : ॥४॥ समिद्ध इन्द्र एकादश ॥११॥ आयात्वष्ट ॥८॥ समिद्धो अग्निर्द्वादश ॥१२॥ अश्विना हविस्त्रयोदश ॥१३॥ अश्विना तेजसैकादश ॥११॥ अष्टानुवाकेषु पञ्चसप्तति : ॥७५॥

## ॥ इति शुक्लयजु : काण्वसंहितायां द्वाविंशोऽध्याय : ॥२२॥

इन्द्र । आ । याहि । धिया । इषित : । विप्रजूत इति विप्र = जूत : । (सुतावत : । सुतवत इति सुत = वत :)*। उप । ब्रह्माणि । वाघत : *।।९।। इन्द्र । आ । याहि । तूतुजान : । उप । ब्रह्माणि । हरिव इति हरि = व : *। सुते । दधिष्व । न : । चन : *।।१०।। अश्विना । पिबताम् । मधु । सरस्वत्या । सजोष सेति स = जोषसा *। इन्द्र : । सुत्रामेति सु = त्रामा । वृत्रहेति वृत्र = हा । जुषन्ताम् । सोम्यम् । मधु *।। ११।।८।।१०८-६=१०२।। **आहत्य पद संख्या ।।१११३-१०७=१००६।।**

## इति द्वाविंशोऽध्याय :

# || इति द्वाविंशोऽध्याय : ||

| Adhyaya | 22 | | |
|---|---|---|---|
| **Anuvaka No.** | **Total Padas** | **Galitha Padas** | **Suddha Padas** |
| 1 | 193 | 65 | 128 |
| 2 | 107 | 0 | 107 |
| 3 | 60 | 19 | 41 |
| 4 | 179 | 0 | 179 |
| 5 | 145 | 0 | 145 |
| 6 | 151 | 0 | 151 |
| 7 | 170 | 17 | 153 |
| 8 | 108 | 6 | 102 |
| **Total** | **1113** | **107** | **1006** |

# ।। त्रयोविंशोऽध्याय : ।।

| | |
|---|---|
| 23.1.a | इमं मे वरुण श्रुधी हवमद्या च मृळय । |
| 23.1.b | त्वामवस्युरा चके ।।१।। |
| 23.2.a | तत्त्वा यामि ब्रह्मणा वन्दमान स्तदाशास्ते यजमानो हविर्भि : । |
| 23.2.b | अहेळमानो वरुणेह बोध्युरुश॰स मा न आयु : प्रमोषी : ।।२।। |
| 23.3.a | त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळो अव यासिसीष्ठा : । |
| 23.3.b | यजिष्ठो वह्नितम : शोशुचानो विश्वा द्वेषा॰सि प्र मुमुग्ध्यस्मत् ।।३।। |
| 23.4.a | स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । |
| 23.4.b | अव यक्ष्व नो वरुण॰ रराणो वीहि मृळीक॰ सुहवो न एधि ।।४।। |
| 23.5.a | महीमू षु मातर॰ सुव्रतानामृतस्य पत्नीमवसे हुवेम । |
| 23.5.b | तुविक्षत्रामजरन्तीमुरूची॰ सुशर्माणमदिति॰ सुप्रणीतिम् ।।५।। |
| 23.6.a | सुत्रामाणं पृथिवी न्द्यामनेहस॰ सुशर्माणमदिति॰ सुप्रणीतिम् । |
| 23.6.b | दैवी न्नाव॰ स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ।।६।। |
| 23.7.a | सुनावमा रुहेयमस्रवन्तीमनागसम् । |
| 23.7.b | शतारित्रा॰ स्वस्तये ।।७।। |
| 23.8.a | आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । |
| 23.8.b | मध्वा रजा॰सि सुक्रतू ।।८।। |

# अथ त्रयोविंशोऽध्याय :

ॐ इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृळय ✱। त्वाम् । अवस्यु : । आ । चके ✱।।१।। तत् । त्वा । यामि । ब्रह्मणा । वन्दमान : । तत् । आ । शास्ते । यजमान : । हविर्भि रिति हवि : = भि : ✱। अहेळमान : । वरुण । इह । बोधि । उरुशꣳसेत्युरु = शꣳस । मा । न : । आयु : । प्र । मोषी : ✱ ।।२।। त्वम् । न : । अग्ने । वरुणस्य । विद्वान् । देवस्य । हेळ : । अव । यासिसीष्ठा : ✱। यजिष्ठ : । वन्हितम इति वन्हि = तम : । शोशुचान : । विश्वा । द्वेषाꣳसि । प्र । मुमुग्धि । अस्मत् ✱।।३।। स : । त्वम् । न : । अग्ने । अवम : । भव । ऊती । नेदिष्ठ : । अस्या : । उषस : । व्युष्टा इति वि = उष्टौ ✱। अव । यक्ष्व । न : । वरुणम् । रराण : । वीहि । मृळीकम् । सुहव इति सु = हव : । न : । एधि ✱।।४।। महीम् । ॐ इत्यू । सु । मातरम् । सुव्रताना मिति सु - व्रतानाम् । ऋतस्य । पत्नीम् । अवसे । हुवेम ✱। तुविक्षत्रा मिति तुवि = क्षत्राम् । अजरन्तीम् । उरूचीम् । सुशर्माण मिति सु = शर्माणम् । अदितिम् । (सुप्रणीतिम् । सुप्रनीति मिति सु = प्रनीतिम् )✱।।५।। सुत्रामाण मिति सु = त्रामाणम् । पृथिवीम् । द्याम् । अनेहसम् । सुशर्माण मिति सु = शर्माणम् । अदितिम् । (सुप्रणीतिम् । सुप्रनीति मिति सु = प्रनीतिम्)✱। दैवीम् । नावम् । स्वरित्रा मिति सु = अरित्राम् । अनागसम् । अस्रवन्तीम् ।आ। रुहेम । स्वस्तये✱।।६।। सुनाव मिति सु = नावम् । आ । रुहेयम् । अस्रवन्तीम् । अनागसम् ✱। शतारित्रा मिति शत = अरित्राम् । स्वस्तये ✱।।७।। आ । न : । मित्रावरुणा । घृतै : । गव्यूतिम् । उक्षतम् ✱। मध्वा । रजाꣳसि । सुक्रतू इति सु = क्रतू ✱।।८।।

| | |
|---|---|
| 23.9.a | प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन । |
| 23.9.b | आ मा जने श्रवयतं य्युवाना श्रुतं मे मित्रावरुणा हवेमा ।।९।। |
| 23.10.a | शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रव : स्वर्का : । |
| 23.10.b | जम्भयन्तोऽहिँ वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवा : ।।१०।। |
| 23.11.a | ते नो अर्वन्तो हवनश्रुतो हवँ विश्वे शृण्वन्तु वाजिनो मितद्रव : । |
| 23.11.b | सहस्रसा मेधसाता इव त्मना महो ये धनꣳ समिथेषु जभ्रिरे ।।११।। |
| 23.12.a | वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञा : । |
| 23.12.b | अस्य मध्व : पिबत मादयध्वं तृप्तायात पथिभि र्देवयानै : ।।१२।।(१) |

| | |
|---|---|
| 23.13.a | समिद्धो अग्नि : समिधा सुसमिद्धो वरेण्य : । |
| 23.13.b | गायत्री च्छन्द इन्द्रियं त्र्यविर्गौर्वयो दधु : ।।१।। |
| 23.14.a | तनूनपाच्छुचिव्रत स्तनूपाश्च सरस्वती । |
| 23.14.b | उष्णिहा च्छन्द इन्द्रियं दित्यवाड् गौर्वयो दधु : ।।२।। |
| 23.15.a | इळाभिरग्निरीड्य : सोमो देवो अमर्त्य : । |
| 23.15.b | अनुष्टुप् छन्द इन्द्रियं पञ्चाविर्गौर्वयो दधु : ।।३।। |

प्र । बाहवा । सिसृतम् । जीवसे । न : । आ । न : । गव्यूतिम् । उक्षतम् । घृतेन ✱। आ । मा । जने । श्रवयतम् । युवाना । श्रुतम् । मे । मित्रावरुणा । हवा । इमा ✱।।९।। शम् । न : । भवन्तु । वाजिन : । हवेषु । देवतातेति देव = ताता । मितद्रव इति मित = द्रव : । स्वर्का इति सु = अर्का : ✱। जम्भयन्त : । अहिम् । वृकम् । रक्षा॑ꣳसि । सनेमि । अस्मत् । युयवन् । अमीवा : ✱।।१०।। ते । न : । अर्वन्त : । हवनश्रुत इति हवन = श्रुत : । हवम् । विश्वे । शृण्वन्तु । वाजिन : । मितद्रव इति मित = द्रव : ✱। सहस्रसा इति सहस्र = सा : । मेधसाता इवेति मेधसातौ = इव । त्मना । मह : । ये । धनम् । समिथेष्विति सं = इथेषु । जभ्रिरे ✱।।११।। वाजेवाज इति वाजे = वाजे । अवत । वाजिन : । न : । धनेषु । विप्रा : । अमृता : । ऋतज्ञा इत्यृत = ज्ञा : ✱। अस्य । मध्व : । पिबत । मादयध्वम् । तृप्ता : । यात । पथिभि रिति पथि = भिं : । देवयानै रिति देव = यानै : ✱।।१२।।१।।१८५-६९=११६।।

समिद्ध इति सं = इद्ध : । अग्नि : । समिधेति सं = इधा । सुसमिद्ध इति सु = समिद्ध : । वरेण्य : ✱। गायत्री । छन्द : । इन्द्रियम् । त्र्यवि रिति त्रि = अवि : । गौ : । वय : । दधु : ✱।।१।। तनून पादिति तनू = नपात् । शुचिव्रत इति शुचि = व्रत : । तनूपा इति तनू = पा : । च । सरस्वती ✱। उष्णिहा । छन्द : । इन्द्रियम् । दित्यवाळिति दित्य = वाट् । गौ : । वय : । दधु : ✱।।२।। इळाभि : । अग्नि : । ईड्य : । सोम : । देव : । अमर्त्य : ✱। (अनुष्टुप् । अनुस्तुबित्य नु = स्तुप् )। छन्द : । इन्द्रियम् । पञ्चावि रिति पञ्च = अवि : । गौ : । वय : । दधु : ✱।।३।।

| | |
|---|---|
| 23.16.a | सुबर्हिरग्नि : पूषण्वान्त्स्तीर्णबर्हिरमर्त्य : । |
| 23.16.b | बृहती च्छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधु : ।।४।। |
| 23.17.a | दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पति : । |
| 23.17.b | पङ्क्तिश्छन्द इहेन्द्रियं तुर्यवाड् गौर्वयो दधु : ।।५।। |
| 23.18.a | उषे यह्वी सुपेशसा विश्वे देवा अमर्त्या : । |
| 23.18.b | त्रिष्टुप् छन्द इहेन्द्रियं पष्ठवाड् गौर्वयो दधु : ।।६।। |
| 23.19.a | दैव्या होतारा भिषजेन्द्रेण सयुजा युजा । |
| 23.19.b | जगती च्छन्द इन्द्रियमनड्वान् गौर्वयो दधु : ।।७।। |
| 23.20.a | तिस्र इळा सरस्वती भारती मरुतो विश : । |
| 23.20.b | विराट् छन्द इहेन्द्रियं धेनुर्गौर्न वयो दधु : ।।८।। |
| 23.21.a | त्वष्टा तुरीपो अद्भुत इन्द्राग्नी पुष्टिवर्धना । |
| 23.21.b | द्विपदा च्छन्द इन्द्रियमुक्षा गौर्न वयो दधु : ।।९।। |
| 23.22.a | शमिता नो वनस्पति : सविता प्रसुवन् भगम् । |
| 23.22.b | ककुप् छन्द इहेन्द्रियँ वशा वेहद्वयो दधु : ।।१०।। |
| 23.23.a | स्वाहा यज्ञँ वरुण : सुक्षत्रो भेषजं करत् । |
| 23.23.b | अतिच्छन्दा इन्द्रियं बृहदृषभो गौर्वयो दधु : ।।११।।(२) |

सुबर्हिरिति सु = बर्हि : । अग्नि : । पूषण्वानिति पूषण् = वान् । स्तीर्णबर्हि रिति स्तीर्ण = बर्हि : । अमर्त्य : ✱।। बृहती । छन्द : । इन्द्रियम् । त्रिवत्स इति त्रि = वत्स : । गौ : । वय : । दधु : ✱।।४।। दुर : । देवी : । दिश : । मही : । ब्रह्मा । देव : । बृहस्पति : ✱। पङ्क्ति : । छन्द : । इह । इन्द्रियम् । तुर्यवाळिति तुर्य = वाट् । गौ : । वय : । दधु : ✱।।५।। उषे इत्युषे । यह्वी इति यह्वी । सुपेश सेति सु = पेशसा । विश्वे । देवा : । अमर्त्या : ✱। (त्रिष्टुप् । त्रिस्तुबिति त्रि = स्तुप् )। छन्द : । इह । इन्द्रियम् । पष्ठवाळिति पष्ठ = वाट् । गौ : । वय : । दधु : ✱।।६।। दैव्या । होतारा । भिषजा । इन्द्रेण । सयुजेति स = युजा । युजा ✱। जगती । छन्द : । इन्द्रियम् । अनड्वान् । गौ : । वय : । दधु : ✱।।७।। तिस्र : । इळा । सरस्वती । भारती । मरुत : । विश : ✱। विराळिति वि = राट् । छन्द : । इह । इन्द्रियम् । धेनु : । गौ : । न । वय : । दधु : ✱।।८।। त्वष्टा । तुरीप : । अद्भुत : । इन्द्राग्नी इतीन्द्राग्नी । पुष्टिवर्धनेति पुष्टि = वर्धना ✱। द्विपदेति द्वि = पदा । छन्द : । इन्द्रियम् । उक्षा । गौ : । न । वय : । दधु : ✱।।९।। शमिता : । न : । वनस्पति : । सविता । प्रसुवन्निति प्र = सुवन् । भगम् ✱। ककुप् । छन्द : । इह । इन्द्रियम् । वशा । वेहत् । वय : । दधु : ✱।।१०।। स्वाहा । यज्ञम् । वरुण : । सुक्षत्र इति सु = क्षत्र : । भेषजम् । करत् ✱। अतिच्छन्दा इत्यति = छन्दा : । इन्द्रियम् । बृहत् । ऋषभ : । गौ : । वय : । दधु : ✱।।११।।२।।१४६-०=१४६।।

| | |
|---|---|
| 23.24.a | वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुता : । |
| 23.24.b | रथन्तरेण तेजसा हविरिन्द्रे वयो दधु : ॥१॥ |
| 23.25.a | ग्रीष्मेण ऋतुना देवा रुद्रा : पञ्चदशे स्तुता : । |
| 23.25.b | बृहता यशसा बलꣳ हविरिन्द्रे वयो दधु : ॥२॥ |
| 23.26.a | वर्षाभि ऋर्तुनाऽऽदित्या : स्तोमे सप्तदशे स्तुता : । |
| 23.26.b | वैरूपेण विशौजसा हविरिन्द्रे वयो दधु : ॥३॥ |
| 23.27.a | शारदेन ऋतुना देवा एकविꣳश ऋभव : स्तुता : । |
| 23.27.b | वैराजेन श्रिया श्रियꣳ हविरिन्द्रे वयो दधु : ॥४॥ |
| 23.28.a | हेमन्तेन ऋतुना देवास्त्रिणवे मरुत : स्तुता : । |
| 23.28.b | बलेन शक्करी : सहो हविरिन्द्रे वयो दधु : ॥५॥ |
| 23.29.a | शैशिरेण ऋतुना देवास्त्रयस्त्रिꣳशे ऽमृता : स्तुता : । |
| 23.29.b | सत्येन रेवती : क्षत्रꣳ हविरिन्द्रे वयो दधु : ॥६॥(३) |

| | |
|---|---|
| 23.30.a | होता यक्षत्समिधाऽग्नि मिळस्पदेऽश्विनेन्द्रꣳ सरस्वतीमजो धूम्रो न गोधूमै : कुवलैर्भेषजं मधु । |
| 23.30.b | शष्पैर्न तेज इन्द्रियं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ॥१॥ |

वसन्तेन । ऋतुना । देवा : । वसव : । त्रिवृतेति त्रि = वृता । स्तुता : *।
रथन्तरेणेति रथं = तरेण । तेजसा । हवि : । इन्द्रे । वय : । दधु : *।।१।।
ग्रीष्मेण । ऋतुना । देवा : । रुद्रा : । पञ्चदश इति पञ्च = दशे । स्तुता : *।
बृहता । यशसा । बलम् । हवि : । इन्द्रे । वय : । दधु : *।।२।। वर्षाभि : ।
ऋतुना । आदित्या : । स्तोमे । सप्तदश इति सप्त = दशे । स्तुता : *। वैरूपेण
। विशा । ओजसा । हवि : । इन्द्रे । वय : । दधु : *।।३।। शारदेन । ऋतुना
। देवा : । एकविꣳश इत्येक = विꣳशे । ऋभव : । स्तुता : *। वैराजेन ।
श्रिया । श्रियम् । हवि : । इन्द्रे । वय : । दधु : *।।४।। हेमन्तेन । ऋतुना ।
देवा : । (त्रिणवे । त्रिनव इति त्रि = नवे )। मरुत : । स्तुता : *। बलेन ।
शक्करी : । सह : । हवि : । इन्द्रे । वय : । दधु : *।।५।। शैशिरेण । ऋतुना
। देवा : । त्रयस्त्रिꣳश इति त्रय : = त्रिꣳशे । अमृता : । स्तुता : *। सत्येन ।
रेवती : । क्षत्रम् । हवि : । इन्द्रे । वय : । दधु : *।।६।।३।।७७-०=७७।।

होता । यक्षत् । समिधेति सं = इधा । अग्निम् । इळ : । पदे । अश्विना । इन्द्रम्
। सरस्वतीम् । अज : । धूम्र : । न । गोधूमै : । कुवलै : । भेषजम् । मधु ।
शष्पै : । न । तेज : । इन्द्रियम् । पय : । सोम : । परिस्रुतेति परि = स्रुता ।
घृतम् । मधु । व्यन्तु । आज्यस्य । होत : । यज *।।१।।

| | |
|---|---|
| 23.31.a | होता यक्षत्तनूनपात्सरस्वती मविर्मेषो न भेषजं पथा मधुमता भरन्नश्विनेन्द्राय वीर्यम् । |
| 23.31.b | बदरैरुपवाकाभि र्भेषजं तोक्मभि : पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।२।। |
| 23.32.a | होता यक्षन्नराशꣳसं न नग्नहुं पतिꣳ सुरया भेषजं मेष : सरस्वती भिषग्रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यम् । |
| 23.32.b | बदरैरुपवाकाभि र्भेषजं तोक्मभि : पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।३।। |
| 23.33.a | होता यक्षदिळेळित आजुह्वान : सरस्वतीमिन्द्रं बलेन वर्धयन्नृषभेण गवेन्द्रिय मश्विनेन्द्राय भेषजम् । |
| 23.33.b | यवै : कर्कन्धुभिर्मधु लाजैर्न मासरं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।४।। |
| 23.34.a | होता यक्षद् बर्हिरूर्णम्रदा भिषङ् नासत्या भिषजाऽश्विनाऽश्वा शिशुमती भिषग्धेनु : सरस्वती भिषक् । |
| 23.34.b | दुह इन्द्राय भेषजं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।५।। |

होता । यक्षत् । तनूनपा दिति तनू = नपात् । सरस्वतीम् । अवि : । मेष : । न । भेषजम् । पथा । मधुमतेति मधु = मता । भरन् । अश्विना । इन्द्राय । वीर्यम् । बदरै : । उपवाकाभि रित्युप = वाकाभि : । भेषजम् । तोक्मभि रिति तोक्म = भि : । पय : *। सोम : । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होत : । यज *।।२।। होता । यक्षत् । नराशꣳसम् । न । नग्नहुम् । पतिम् । सुरया । भेषजम् । मेष : । सरस्वती । भिषक् । रथ : । न । चन्द्री । अश्विनो : । वपा : । इन्द्रस्य । वीर्यम् । बदरै : । उपवाकाभि रित्युप = वाकाभि : । भेषजम् । तोक्मभि रिति तोक्म = भि : । पय : *। सोम : । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होत : । यज *।।३।। होता । यक्षत् । इळा । ईळित : । आजुह्वान इत्या = जुह्वान : । सरस्वतीम् । इन्द्रम् । बलेन । वर्धयन् । ऋषभेण । गवा । इन्द्रियम् । अश्विना । इन्द्राय । भेषजम् । यवै : । कर्कन्धुभि रिति कर्कन्धु = भि : । मधु । लाजै : । न । मासरम् । पय : *। सोम : । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होत : । यज *।।४।। होता । यक्षत् । बर्हि : । ऊर्णम्रदा इत्यूर्ण = म्रदा : । भिषक् । नासत्या । भिषजा । अश्विना । अश्वा । शिशुमतीति शिशु = मती । भिषक् । धेनु : । सरस्वती । भिषक् । दुहे । इन्द्राय । भेषजम् । पय : *। सोम : । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होत : । यज *।।५।।

| | |
|---|---|
| 23.35.a | होता यक्षद्दुरो दिश : कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिश इन्द्रो न रोदसी दुघे दुहे धेनु : सरस्वत्यश्विनेन्द्राय भेषजम् । |
| 23.35.b | शुक्रं न ज्योतिरिन्द्रियं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।६।। |
| 23.36.a | होता यक्षत्सुपेशसोषे नक्तं दिवाऽश्विना समञ्जाते सरस्वत्या त्विषिमिन्द्रे न भेषजम् । |
| 23.36.b | श्येनो न रजसा हृदा श्रिया न मासरं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।७।। |
| 23.37.a | होतायक्षद्दैव्या होतारा भिषजाऽश्विनेन्द्रं नजागृविदिवा नक्तं न भेषजै :। |
| 23.37.b | शूष९ सरस्वती भिषक् सीसेन दुह इन्द्रियं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।८।। |
| 23.38.a | होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपसो रूपमिन्द्रे हिरण्ययमश्विनेळा न भारती । |
| 23.38.b | वाचा सरस्वती मह इन्द्राय दुह इन्द्रियं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।९।। |
| 23.39.a | होता यक्षत् सुरेतसमृषभं नर्यापसं त्वष्टारमिन्द्रमश्विना भिषजं न सरस्वतीमोजो न जूतिरिन्द्रियँ वृको न रभसो भिषक् । |

होता । यक्षत् । दुरः । दिशः । कवष्यः । न । व्यचस्वतीः । अश्विभ्यामित्यश्वि = भ्याम् । न । दुरः । दिशः । इन्द्रः । न । रोदसी इति रोदसी । दुघे इति दुघे । दुहे । धेनुः । सरस्वती । अश्विना । इन्द्राय । भेषजम् । शुक्रम् । न । ज्योतिः । इन्द्रियम् । पयः *। सोमः । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज *॥६॥ होता । यक्षत् । सुपेशसेति सु = पेशसा । उषे इत्युषे । नक्तम् । दिवा । अश्विना । सम् । अञ्जाते इत्यञ्जाते । सरस्वत्या । त्विषिम् । इन्द्रे । न । भेषजम् । श्येनः । न । रजसा । हृदा । श्रिया । न । मासरम् । पयः *। सोमः । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज *॥७॥ होता । यक्षत् । दैव्या । होतारा । भिषजा । अश्विना । इन्द्रम् । न । जागृवि । दिवा । नक्तम् । न । भेषजैः । शूषम् । सरस्वती । भिषक् । सीसेन । दुहे । इन्द्रियम् । पयः *। सोमः । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज *॥८॥ होता । यक्षत् । तिस्रः । देवीः । न । भेषजम् । त्रयः । त्रिधातव इति त्रि = धातवः । अपसः । रूपम् । इन्द्रे । हिरण्ययम् । अश्विना । इळा । न । भारती । वाचा । सरस्वती । महः । इन्द्राय । दुहे । इन्द्रियम् । पयः *। सोमः । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होतः । यज *॥९॥ होता । यक्षत् । सुरेतस मिति सु = रेतसम् । ऋषभम् । नर्यापस मिति नर्य = अपसम् । त्वष्टारम् । इन्द्रम् । अश्विना । भिषजम् । न । सरस्वतीम् । ओजः । न । जूतिः । इन्द्रियम् । वृकः । न । रभसः । भिषक् ।

| | |
|---|---|
| 23.39.b | यश : सुरया भेषजꣳ श्रिया न मासरं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।१०।। |
| 23.40.a | होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुं भीमं न मन्युꣳ राजानँ व्याघ्रं नमसाऽश्विना । |
| 23.40.b | भामꣳ सरस्वती भिषगिन्द्राय दुह इन्द्रियं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।११।। |
| 23.41.a | होता यक्षदग्निꣳ स्वाहाऽऽज्यस्य स्तोकानाꣳ स्वाहा मेदसां पृथक् स्वाहा च्छागमश्विभ्याꣳ स्वाहा मेषꣳ सरस्वत्यै । |
| 23.41.b | स्वाह ऋषभमिन्द्राय सिꣳहाय सहस इन्द्रियꣳ स्वाहाऽग्निं न्न भेषजꣳ स्वाहा सोममिन्द्रियम् । |
| 23.41.c | स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारँ वरुणं भिषजां पतिꣳ स्वाहा वनस्पतिम् प्रियं पाथो न भेषजम् । |
| 23.41.d | स्वाहा देवा आज्यपा जुषाणो अग्निर्भेषजं पय : सोम : परिस्रुता घृतं मधु व्यन्त्वाज्यस्य होतर्यज ।।१२।।(४) |

| | |
|---|---|
| 23.42.a | होता यक्षदश्विनौ च्छागस्य वपाया मेदसो जुषेताꣳ हविर्होतर्यज । |
| 23.42.b | होता यक्षत्सरस्वतीम् मेषस्य वपाया मेदसो जुषताꣳ हविर्होतर्यज । |
| 23.42.c | होता यक्षदिन्द्रमृषभस्य वपाया मेदसो जुषताꣳ हविर्होतर्यज ।।१।। |

यश : । सुरया । भेषजम् । श्रिया । न । मासरम् । पय : ✱। सोम : । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होत : । यज ✱।।१०।। होता । यक्षत् । वनस्पतिम् । शमितारम् । शतक्रतु मिति शत = क्रतुम् । भीमम् । न । मन्युम् । राजानम् । व्याघ्रम् । नमसा । अश्विना । भामम् । सरस्वती । भिषक् । इन्द्राय । दुहे । इन्द्रियम् । पय : ✱। सोम : । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होत : । यज ✱।।११।। होता । यक्षत् । अग्निम् । स्वाहा । आज्यस्य । स्तोकानाम् । स्वाहा । मेदसाम् । पृथक् । स्वाहा । छागम् । अश्विभ्या मित्यश्वि = भ्याम् । स्वाहा । मेषम् । सरस्वत्यै । स्वाहा । ऋषभम् । इन्द्राय । सिꣳहाय । सहसे । इन्द्रियम् । स्वाहा । अग्निम् । न । भेषजम् । स्वाहा । सोमम् । इन्द्रियम् । स्वाहा । इन्द्रम् । सुत्रामाण मिति सु = त्रामाणम् । सवितारम् । वरुणम् । भिषजाम् । पतिम् । स्वाहा । वनस्पतिम् । प्रियम् । पाथ : । न । भेषजम् । स्वाहा । देवा : । आज्यपा इत्याज्य = पा : । जुषाण : । अग्नि : । भेषजम् । पय : । सोम : । परिस्रुतेति परि = स्रुता । घृतम् । मधु । व्यन्तु । आज्यस्य । होत : । यज ✱।।१२।।४।।३८३-१११=२७२।।

होता । यक्षत् । अश्विनौ । छागस्य । वपाया : । मेदस : । जुषेताम् । हवि : । होत : । यज ✱। होता । यक्षत् । सरस्वतीम् । मेषस्य । वपाया : । मेदस : । जुषताम् । हवि : । होत : । यज ✱। होता । यक्षत् । इन्द्रम् । ऋषभस्य । वपाया : । मेदस : । जुषताम् । हवि : । होत : । यज ✱।।१।।

| | |
|---|---|
| 23.43.a | होता यक्षदश्विनौ सरस्वतीमिन्द्र॑ सुत्रामाणमिमे सोमा : सुरामाणश्छागैर्न मेषै ऋषभै : सुता : । |
| 23.43.b | शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृता : शुक्रा : पयस्वन्तोऽमृता : प्रस्थिता वो मधुश्च्युतस्तानश्विना सरस्वतीन्द्र : सुत्रामा वृत्रहा जुषन्ता॑ सोम्यं मधु । |
| 23.43.c | पिबन्तु मदन्तु व्यन्तु होतर्यज ।।२।। |
| 23.44.a | होता यक्षदश्विनौ च्छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्य : पुरा पौरुषेय्या गृभ : । |
| 23.44.b | घस्तान् नूनं घासे अज्राणाँ य्यवसप्रथमाना॑ सुमत्क्षराणा॑ शतरुद्रियाणा मग्निष्वात्तानां पीवोपवसनानाम् । |
| 23.44.c | पार्श्वत : श्रोणित : शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेता॑ हविर्होतर्यज । |
| 23.44.d | होता यक्षत्सरस्वतीम् मेषस्य हविष आवयदद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्य : पुरा पौरुषेय्या गृभ : । |
| 23.44.e | घसन्नूनं घासे अज्राणाँ य्यवसप्रथमाना॑ सुमत्क्षराणा॑ शतरुद्रियाणा मग्निष्वात्तानां पीवोपवसनानाम् । |

होता । यक्षत् । अश्विनौ । सरस्वतीम् । इन्द्रम् । सुत्रामाण मिति सु = त्रामाणम् । इमे । सोमा : । सुरामाण : । छागै : । न । मेषै : । ऋषभै : । सुता : । शष्पै : । न । स्तोक्मभि रिति तोक्म = भि : । लाजै : । महस्वन्त : । मदा : । मासरेण । (परिष्कृता : । परिकृता इति परि = कृता : )। शुक्रा : । पयस्वन्त : । अमृता : । प्रस्थिता इति प्र = स्थिता : । व : । मधुश्च्युत इति मधु = श्च्युत : । तान् । अश्विना । सरस्वती । इन्द्र :। सुत्रामेति सु = त्रामा । वृत्रहेति वृत्र = हा । जुषन्ताम् । सोम्यम् । मधु । पिबन्तु । मदन्तु । व्यन्तु । होत : । यज *।।२।। होता । यक्षत् । अश्विनौ । छागस्य । हविष : । आत्ताम् । अद्य । मध्यत : । मेद : । उद्भृत मित्युत् = भृतम् । पुरा । द्वेषोभ्य इति द्वेष : = भ्य : । पुरा । पौरुषेय्या : । गृभ : । घस्ताम् । नूनम् । घासे अज्राणा मिति घासे = अज्राणाम् । यवसप्रथमाना मिति यवस = प्रथमानाम् । सुमत्क्षराणा मिति सुमत् = क्षराणाम् । शतरुद्रियाणा मिति शत = रुद्रियाणाम् । (अग्निष्वात्तानाम् । अग्निस्वात्ताना मित्यग्नि = स्वात्तानाम् )। पीवोपवसनाना मिति पीव : = उपवसनानाम् । पार्श्वत : । श्रोणित : । शितामत : । उत्सादत इत्युत् = सादत : । अङ्गादङ्गा दित्यङ्गात् = अङ्गात् । अवत्तानाम् । करत : । एव । अश्विना । जुषेताम् । हवि : । होत : । यज *। होता । यक्षत् । सरस्वतीम् । मेषस्य । हविष : । आवयत् । अद्य । मध्यत : । मेद : । उद्भृत मित्युत् = भृतम् । पुरा । द्वेषोभ्य इति द्वेष : = भ्य : । पुरा । पौरुषेय्या : । गृभ : । घसत् । नूनम् । घासे अज्राणा मिति घासे = अज्राणाम् । यवसप्रथमाना मिति यवस = प्रथमानाम् । सुमत्क्षराणा मिति सुमत् = क्षराणाम् । शतरुद्रियाणा मिति शत = रुद्रियाणाम् ।

| | |
|---|---|
| 23.44.f | पार्श्वत : श्रोणित : शितामत उत्सादतोऽङ्गादङ्गादवत्तानां<br>करदेवꣳ सरस्वती जुषताꣳ हविर्होतर्यज । |
| 23.44.g | होता यक्षदिन्द्रमृषभस्य हविष आवयदद्य मध्यतो मेद उद्भृतं<br>पुरा द्वेषोभ्य : पुरा पौरुषेय्या गृभ : । |
| 23.44.h | घसन्नूनं घासे अज्राणाँ य्यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणा<br>मग्निष्वात्तानां पीवोपवसनानाम् । |
| 23.44.i | पार्श्वत : श्रोणित : शितामत उत्सादतोऽङ्गादङ्गादवत्तानां<br>करदेवमिन्द्रो जुषताꣳ हविर्होतर्यज ॥३॥ |
| 23.45.a | होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाऽधित । |
| 23.45.b | यत्राश्विनोश्छागस्य हविष : प्रिया धामानि यत्र सरस्वत्या मेषस्य<br>हविष : प्रिया धामानि यत्रेन्द्रस्य ऋषभस्य हविष : प्रिया धामानि । |
| 23.45.c | यत्राग्ने : प्रिया धामानि यत्र सोमस्य प्रिया धामानि यत्रेन्द्रस्य<br>सुत्राम्ण : प्रिया धामानि । |
| 23.45.d | यत्र सवितु : प्रिया धामानि यत्र वरुणस्य प्रिया धामानि<br>यत्र वनस्पते : प्रिया पाथाꣳसि । |
| 23.45.e | यत्र देवानामाज्यपानाम् प्रिया धामानि यत्राग्नेर्होतु : प्रिया धामानि । |

(अग्निष्वात्तानाम् । अग्निस्वात्ताना मित्यग्नि = स्वात्तानाम् )। पीवोपवसनाना मिति पीव : = उपवसनानाम् । पार्श्वत : । श्रोणित : । शितामत : । उत्सादत इत्युत् = सादत : । अङ्गादङ्गा दित्यङ्गात् = अङ्गात् । अवत्तानाम् । करत् । एवम् । सरस्वती । जुषताम् । हवि : । होत : । यज *। होता । यक्षत् । इन्द्रम् । ऋषभस्य । हविष : । आवयत् । अद्य । मध्यत : । मेद : । उद्भृत मित्युत् = भृतम् । पुरा । द्वेषोभ्य इति द्वेष : = भ्य : । पुरा । पौरुषेय्या : । गृभ : । घसत् । नूनम् । घासे अज्राणा मिति घासे = अज्राणाम् । यवसप्रथमाना मिति यवस = प्रथमानाम् । सुमत्क्षराणा मिति सुमत् = क्षराणाम् । शतरुद्रियाणा मिति शत = रुद्रियाणाम् । (अग्निष्वात्तानाम् । अग्निस्वात्ताना मित्यग्नि = स्वात्तानाम् )। पीवोपवसनाना मिति पीव : = उपवसनानाम् । पार्श्वत : । श्रोणित : । शितामत : । उत्सादत इत्युत् = सादत : । अङ्गादङ्गा दित्यङ्गात् = अङ्गात् । अवत्तानाम् । करत् । एवम् । इन्द्र : । जुषताम् । हवि : । होत : । यज *।।३।। होता । यक्षत् । वनस्पतिम् । अभि । हि । पिष्टतम येति पिष्ट = तमया । रभिष्ठया । रशनया । अधित । यत्र । अश्विनो : । छागस्य । हविष : । प्रिया । धामानि । यत्र । सरस्वत्या : । मेषस्य । हविष : । प्रिया । धामानि । यत्र । इन्द्रस्य । ऋषभस्य । हविष : । प्रिया । धामानि । यत्र । अग्ने : । प्रिया । धामानि । यत्र । सोमस्य । प्रिया । धामानि । यत्र । इन्द्रस्य । सुत्राम्ण इति सु = त्राम्ण : । प्रिया । धामानि । यत्र । सवितु : । प्रिया । धामानि । यत्र । वरुणस्य । प्रिया । धामानि । यत्र । वनस्पते : । प्रिया । पाथाꣳसि । यत्र । देवानाम् । आज्यपाना मित्याज्य = पानाम् । प्रिया । धामानि । यत्र । अग्ने : । होतु : ।

| | |
|---|---|
| 23.45.f | तत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयस इव कृत्वी करदेवं देवो वनस्पतिर्जुषतां॰ हविर्होतर्यज ।।४।। |
| 23.46.a | होता यक्षदग्निं॰ स्विष्टकृत मयाळग्नि रश्विनोश्छागस्य हविष : प्रिया धामान्ययाट् सरस्वत्या मेषस्य हविष : प्रिया धामान्ययाळिन्द्रस्य ऋषभस्य हविष : प्रिया धामानि । |
| 23.46.b | अयाळग्ने : प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळिन्द्रस्य सुत्राम्ण : प्रिया धामानि । |
| 23.46.c | अयाट् सवितु : प्रिया धामान्ययाड् वरुणस्य प्रिया धामान्ययाड् वनस्पते : प्रिया पाथां॰सि । |
| 23.46.d | अयाड् देवानामाज्यपानाम् प्रियाधामानि यक्षदग्नेर्होतु : प्रिया धामानि । |
| 23.46.e | यक्षत्स्वं महिमानमायजतामेज्या इष : कृणोतु सो अध्वरा जातवेदा जुषतां॰ हविर्होतर्यज ।।५।।(५) |

| | |
|---|---|
| 23.47.a | देवं बर्हि : सरस्वती सुदेवमिन्द्रे अश्विना । |
| 23.47.b | तेजो न चक्षुरक्ष्योर्बर्हिषा दधुरिन्द्रियँ वसुवने वसुधेयस्यव्यन्तु यज ।।१।। |
| 23.48.a | देवीर्द्वारो अश्विना भिषजेन्द्रे सरस्वती । |

प्रिया । धामानि । तत्र । एतान् । प्रस्तुत्येवेति प्रस्तुत्य = इव । उपस्तुत्येवेत्युपस्तुत्य - इव । उपावस्रक्ष दित्युप = अवस्रक्षत् । रभीयस इवेति रभीयस : = इव । कृत्वी । करत् । एवम् । देव : । वनस्पति : । जुषताम् । हवि : । होत : । यज *।।४।। होता । यक्षत् । अग्निम् । स्विष्टकृत मिति स्विष्ट = कृतम् । अयाट् । अग्नि : । अश्विनो : । छागस्य । हविष : । प्रिया । धामानि । अयाट् । सरस्वत्या : । मेषस्य । हविष : । प्रिया । धामानि । अयाट् । इन्द्रस्य । ऋषभस्य । हविष : । प्रिया । धामानि । अयाट् । अग्ने : । प्रिया । धामानि । अयाट् । सोमस्य । प्रिया । धामानि । अयाट् । इन्द्रस्य । सुत्राम्ण इति सु = त्राम्ण : । प्रिया । धामानि । अयाट् । सवितु : । प्रिया । धामानि । अयाट् । वरुणस्य । प्रिया । धामानि । अयाट् । वनस्पते : । प्रिया । पाथाꣳसि । अयाट् । देवानाम् । आज्यपाना मित्याज्य = पानाम् । प्रिया । धामानि । यक्षत् । अग्ने : । होतु : । प्रिया । धामानि । यक्षत् । स्वम् । महिमानम् । आ । यजताम् । एज्या इत्या = इज्या : । इष : । कृणोतु । स : । अध्वरा । जातवेदा इति जात = वेदा : । जुषताम् । हवि : । होत : । यज *।।५।।५।। ३३०-१४१ =१८९।।

देवम् । बर्हि : । सरस्वती । सुदेवमिति सु = देवम् । इन्द्रे । अश्विना *। तेज : । न । चक्षु : । अक्ष्यो : । बर्हिषा । दधु : । इन्द्रियम् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज *।।१।। देवी : । द्वार : । अश्विना । भिषजा । इन्द्रे । सरस्वती *।

| | |
|---|---|
| 23.48.b | प्राणं न वीर्य न्नसिद्वारो दधुरिन्द्रियँ वसुवने वसुधेयस्यव्यन्तु यज ।।२।। |
| 23.49.a | देवी उषासा अश्विना सुत्रामेन्द्रे सरस्वती । |
| 23.49.b | बलं न वाचमास्य उषाभ्या न्दधुरिन्द्रियँ वसुवने वसुधेयस्य व्यन्तु यज ।।३।। |
| 23.50.a | देवी जोष्ट्री सरस्वत्यश्विनेन्द्रमवर्धयन् । |
| 23.50.b | श्रोत्रं न कर्णयोर्यशो जोष्ट्रीभ्यां दधुरिन्द्रियँ वसुवने वसुधेयस्य व्यन्तु यज ।।४।। |
| 23.51.a | देवी ऊर्जाहुती दुघे सुदुघेन्द्रे सरस्वत्यश्विना भिषजाऽवत : । |
| 23.51.b | शुक्रं न ज्योति : स्तनयोराहुती धत्त इन्द्रियँ वसुवने वसुधेयस्य व्यन्तु यज ।।५।। |
| 23.52.a | देवा देवानाम् भिषजा होतारा इन्द्रमश्विना वषट्कारै : सरस्वती त्विषि न्न हृदये मतिम् । |
| 23.52.b | होतृभ्यां दधुरिन्द्रियँ वसुवने वसुधेयस्य व्यन्तु यज ।।६।। |
| 23.53.a | देवीस्तिस्रस्तिस्रो देवीरश्विनेळा सरस्वती । |
| 23.53.b | शूषं न मध्ये नाभ्यामिन्द्राय दधुरिन्द्रियँ वसुवने वसुधेयस्य व्यन्तु यज ।।७।। |
| 23.54.a | देव इन्द्रो नराशँसस्त्रिवरूथ : सरस्वत्याऽश्विभ्यामीयते रथ : । |

प्राणम् । न । वीर्यम् । नसि । द्वार : । दधु : । इन्द्रियम् । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।२।। देवी इति देवी । (उषासौ । उषसा इत्युषसौ )। अश्विना । सुत्रामेति सु = त्रामा । इन्द्रे । सरस्वती ✱। बलम् । न । वाचम् । आस्ये । उषाभ्याम् । दधु : । इन्द्रियम् । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।३।। देवी इति देवी । जोष्ट्री इति जोष्ट्री । सरस्वती । अश्विना । इन्द्रम् । अवर्धयन् ✱। श्रोत्रम् । न । कर्णयो : । यश : । जोष्ट्रीभ्याम् । दधु : । इन्द्रियम् । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।४।। देवी इति देवी । ऊर्जाहुती इत्यूर्ज = आहुती । दुघे इति दुघे । सुदुघेति सु = दुघा । इन्द्रे । सरस्वती । अश्विना । भिषजा । अवत : ✱।। शुक्रम् । न । ज्योति : । स्तनयो : । आहुती इत्या = हुती । धत्त : । इन्द्रियम् । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।५।। देवा । देवानाम् । भिषजा । होतारौ । इन्द्रम् । अश्विना । वषट्कारै रिति वषट् = कारै : । सरस्वती । त्विषिम् । न । हृदये । मतिम् ✱। होतृभ्या मिति होतृ = भ्याम् । दधु : । इन्द्रियम् । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।६।। देवी : । तिस्र : । तिस्र : । देवी : । अश्विना । इळा । सरस्वती ✱। शूषम् । न । मध्ये । नाभ्याम् । इन्द्राय । दधु : । इन्द्रियम् । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।७।। देव : । इन्द्र : । नराशꣳस : । त्रिवरूथ इति त्रि = वरूथ : । सरस्वत्या । अश्विभ्या मित्यश्वि = भ्याम् । ईयते । रथ : ✱।

| | |
|---|---|
| 23.54.b | रेतो न रूपममृत ञ्जनित्रमिन्द्राय त्वष्टा दधदिन्द्रियाणि वसुवने वसुधेयस्य व्यन्तु यज ॥८॥ |
| 23.55.a | देवो देवै र्वनस्पति र्हिरण्यपर्णो अश्विभ्या॰ सरस्वत्या सुपिप्पल इन्द्राय पच्यते मधु । |
| 23.55.b | ओजो न जूति ऋषभो न भामँ वनस्पतिर्नो दधदिन्द्रियाणि वसुवने वसुधेयस्य व्यन्तु यज ॥९॥ |
| 23.56.a | देवं बर्हिर्वारितीनामध्वरे स्तीर्णमश्विभ्या मूर्णम्रदा : सरस्वत्या स्योनमिन्द्र ते सद : । |
| 23.56.b | ईशायै मन्यु॰ राजानं बर्हिषा दधुरिन्द्रियँ वसुवने वसुधेयस्य व्यन्तु यज ॥१०॥ |
| 23.57.a | देवो अग्नि : स्विष्टकृद्देवान्यक्षद्यथायथ॰ होतारा इन्द्रमश्विना वाचा वाच॰ सरस्वतीमग्नि॰ सोम॰ स्विष्टकृत् । |
| 23.57.b | स्विष्ट इन्द्र : सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पति : स्विष्टा देवा आज्यपा : । |
| 23.57.c | स्विष्टो अग्नि रग्निना होता होत्रे स्विष्टकृद्यशो न दधदिन्द्रिय मूर्ज मपचिति॰ स्वधाँ वसुवने वसुधेयस्य व्यन्तु यज ॥११॥ |

रेत : । न । रूपम् । अमृतम् । जनित्रम् । इन्द्राय । त्वष्टा । दधत् । इन्द्रियाणि । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।८।। देव : । देवै : । वनस्पति : । हिरण्यपर्ण इति हिरण्य = पर्ण : । अश्विभ्या मित्यश्वि = भ्याम् । सरस्वत्या । सुपिप्पल इति सु = पिप्पल : । इन्द्राय । पच्यते । मधु ✱। ओज : । न । जूति : । ऋषभ : । न । भामम् । वनस्पति : । न : । दधत् । इन्द्रियाणि । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।९।। देवम् । बर्हि : । वारितीनाम् । अध्वरे । स्तीर्णम् । अश्विभ्या मित्यश्वि = भ्याम् । ऊर्णम्रदा इत्यूर्ण = म्रदा : । सरस्वत्या । स्योनम् । इन्द्र । ते । सद : ✱। ईशायै । मन्युम् । राजानम् । बर्हिषा । दधु : । इन्द्रियम् । वसुवन इति वसु = वने ✱। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।१०।। देव : । अग्नि : । स्विष्टकृदिति स्विष्ट = कृत् । देवान् । यक्षत् । यथायथ मिति यथा = यथम् । होतारौ । इन्द्रम् । अश्विना । वाचा । वाचम् । सरस्वतीम् । अग्निम् । सोमम् । स्विष्टकृदिति स्विष्ट = कृत् । स्विष्ट इति सु = इष्ट : । इन्द्र : । सुत्रामेति सु = त्रामा । सविता । वरुण : । भिषक् । इष्ट : । देव : । वनस्पति : । स्विष्टा इति सु = इष्टा : । देवा : । आज्यपा इत्याज्य = पा : । स्विष्ट इति सु = इष्ट : । अग्नि : । अग्निना । होता । होत्रे । स्विष्टकृदिति स्विष्ट = कृत् । यश : । न । दधत् । इन्द्रियम् । ऊर्जम् । अपचिति मित्यप = चितिम् । स्वधाम् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।११।।

| | |
|---|---|
| 23.58.a | अग्नि मद्य होतारमवृणीतायँ य्यजमान : पचन् पक्ती : पचन् पुरोळाशान् बध्नन्नश्विभ्यां छागᳫ सरस्वत्यै मेषमिन्द्राय ऋषभम् । |
| 23.58.b | सुन्वन्नश्विभ्याᳫ सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान् ।।१२।। |
| 23.59.a | सूपस्था अद्य देवो वनस्पतिरभव दश्विभ्यां छागेन सरस्वत्यै मेषेणेन्द्राय ऋषभेण । |
| 23.59.b | अक्षᳫस्तान् मेदस्त : प्रति पचतागृभीषतावीवृधन्त पुरोळाशैरपुरश्विना सरस्वतीन्द्र : सुत्रामा सुरासोमान् ।।१३।। |
| 23.60.a | त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायँ य्यजमानो बहुभ्य आ सङ्गतेभ्य एष मे देवेषु वसु वार्यायक्ष्यत इति । |
| 23.60.b | ता या देवा देव दानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुष : सूक्तवाकाय सूक्ता ब्रूहि ।।१४।।(६) |

इमं मे वरुण द्वादश ।।१२।। समिद्धो अग्निरेकादश ।।११।। वसन्तेन षट् ।।६।। होता यक्षद् द्वादश ।।१२।। होता यक्षदश्विनौ च्छागस्य पञ्च ।।५।। देवं बर्हिश्चतुर्दश ।।१४।। षळनुवाकेषु षष्टि : ।।६०।।

## ।। इति शुक्लयजु : काण्वसंहितायां त्रयोविंशोऽध्याय : ।।

अग्निम् । अद्य । होतारम् । अवृणीत । अयम् । यजमान : । पचन् । पक्ती : । पचन् । पुरोळाशान् । बध्नन् । अश्विभ्या मित्यश्वि = भ्याम् । छागम् । सरस्वत्यै । मेषम् । इन्द्राय । ऋषभम् । सुन्वन् । अश्विभ्या मित्यश्वि = भ्याम् । सरस्वत्यै । इन्द्राय । सुत्राम्ण इति सु = त्राम्णे । सुरासोमानिति सुरा = सोमान् ।।१२।। सूपस्था इति सु = उपस्था : । अद्य । देव : । वनस्पति : । अभवत् । अश्विभ्या मित्यश्वि = भ्याम् । छागेन । सरस्वत्यै । मेषेण । इन्द्राय । ऋषभेण । अक्षन् । तान् । मेदस्त : । प्रति । पचत । अगृभीषत । अवीवृधन्त । पुरोळाशै : । अपु : । अश्विना । सरस्वती । इन्द्र : । सुत्रामेति सु = त्रामा । सुरासोमानिति सुरा = सोमान् ।।१३।। त्वाम् । अद्य । ऋषे । आर्षेय । ऋषीणाम् । नपात् । अवृणीत । अयम् । यजमान : । बहुभ्य इति बहु = भ्य : । आ । सङ्गतेभ्य इति सं = गतेभ्य : । एष : । मे । देवेषु । वसु । वारि । आ । यक्ष्यते । इति । ता । या । देवा : । देव । दानानि । अदु : । तानि । अस्मै । आ । च । शास्व । आ । च । गुरस्व । इषित : । च । होत : । असि । भद्रवाच्या येति भद्र = वाच्याय । प्रेषित इति प्र = इषित : । मानुष : । सूक्तवाकायेति सूक्त = वाकाय । सूक्तेति सु = उक्ता । ब्रूहि *।।१४।।६।।३२८-२७=३०१।। **आहत्य पद संख्या ।।१४४९-३४८= ११०१।।**

## इति त्रयोविंशोऽध्याय :

# ।। इति त्रयोविंशोऽध्याय : ।।

| Adhyaya | 23 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 185 | 69 | 116 |
| 2 | 146 | 0 | 146 |
| 3 | 77 | 0 | 77 |
| 4 | 383 | 111 | 272 |
| 5 | 330 | 141 | 189 |
| 6 | 328 | 27 | 301 |
| **Total** | **1449** | **348** | **1101** |

# ।। अथ चतुर्विंशोऽध्याय : ।।

| | |
|---|---|
| 24.1.a | तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहि । |
| 24.1.b | देवस्यत्वा सवितु : प्रसवेऽश्विनो र्बाहुभ्याम् पूष्णोहस्ताभ्या माददे।।१।। |
| 24.2.a | इमा मगृभ्णन् रशना मृतस्य पूर्व आयुषि विदथेषु कव्या । |
| 24.2.b | सा नो अस्मिन्त्सुत आ बभूव ऋतस्य सामन्त्सरमारपन्ती ।।२।। |
| 24.3.a | अभिधा असि भुवनमसि यन्ताऽसि धर्ता । |
| 24.3.b | सत्वमग्निँ वैश्वानर९ँसप्रथसं गच्छ स्वाहाकृत : स्वगात्वा देवेभ्य :।।३।। |
| 24.4.a | प्रजापतये ब्रह्मन्नश्वम् भन्त्स्यामि देवेभ्य : प्रजापतये तेन राध्यासम् । |
| 24.4.b | तं बधान देवेभ्य : प्रजापतेये तेन राध्नुहि । |
| 24.4.c | प्रजापतये त्वा जुष्टं प्रोक्षामी न्द्राग्निभ्या न्त्वा जुष्टं प्रोक्षामि वायवे त्वा जुष्टं प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि ।।४।। |
| 24.5.a | यो अर्वन्तं जिघा९ँसति तमभ्यमीति वरुण : । |
| 24.5.b | परो मर्त : पर : श्वा ।।५।।(१) |

| | |
|---|---|
| 24.6.a | अग्नये स्वाहा सोमाय स्वाहाऽपां मोदाय स्वाहा सवित्रे स्वाहा वायवे स्वाहा विष्णवे स्वाहा । |

# अथ चतुर्विंशोऽध्याय :

ॐ तेज : । असि । शुक्रम् । अमृतम् । (आयुष्पा : । आयु : पा इत्यायु : = पा :) । आयु : । मे । पाहि । देवस्य । त्वा । सवितु : । प्रसव इति प्र = सवे । अश्विनो : । बाहुभ्या मिति बाहु = भ्याम् । पूष्ण : । हस्ताभ्याम् । आ । ददे *।।१।। इमाम् । अगृभ्णन् । रशनाम् । ऋतस्य । पूर्वे । आयुषि । विदथेषु । कव्या *। सा । न : । अस्मिन् । सुते । आ । बभूव । ऋतस्य । सामन् । सरम् । आरपन्तीत्या = रपन्ती *।।२।। अभिधा इत्यभि = धा : । असि । भुवनम् । असि । यन्ता । असि । धर्ता । स : । त्वम् । अग्निम् । वैश्वानरम् । सप्रथस मिति स = प्रथसम् । गच्छ । स्वाहाकृत इति स्वाहा = कृत : । स्वगेति स्व = गा । त्वा । देवेभ्य : ।।३।। प्रजापतय इति प्रजा = पतये । ब्रह्मन् । अश्वम् । भन्त्स्यामि । देवेभ्य : । प्रजापतय इति प्रजा = पतये । तेन । राध्यासम् । तम् । बधान । देवेभ्य : । प्रजापतय इति प्रजा = पतये । तेन । राध्नुहि । प्रजापतय इति प्रजा = पतये । त्वा । जुष्टम् । प्र । उक्षामि । इन्द्राग्निभ्या मितीन्द्राग्नि = भ्याम् । त्वा । जुष्टम् । प्र । उक्षामि । वायवे । त्वा । जुष्टम् । प्र । उक्षामि । विश्वेभ्य : । त्वा । देवेभ्य : । जुष्टम् । प्र । उक्षामि । सर्वेभ्य : । त्वा । देवेभ्य : । जुष्टम् । प्र । उक्षामि *।।४।। य : । अर्वन्तम् । जिघांᳲसति । तम् । अभि । अमीति । वरुण : *। पर : । मर्त : । पर : । श्वा *।।५।।१।।१०५-२३=८२।।

अग्नये । स्वाहा । सोमाय । स्वाहा । अपाम् । मोदाय । स्वाहा । सवित्रे । स्वाहा । वायवे । स्वाहा । विष्णवे । स्वाहा ।

| | |
|---|---|
| 24.6.b | इन्द्रायस्वाहा बृहस्पतये स्वाहा मित्रायस्वाहा वरुणाय स्वाहा ।।१।।(२) |

| | |
|---|---|
| 24.7.a | हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा । |
| 24.7.b | प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा ।।१।। |
| 24.8.a | निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहा । |
| 24.8.b | आसीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा ।।२।। |
| 24.9.a | कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा । |
| 24.9.b | सꣳहानाय स्वाहोपस्थिताय स्वाहाऽऽयनायस्वाहा प्रायणायस्वाहा।।३।। |
| 24.10.a | यते स्वाहा धावते स्वाहोद् द्रावाय स्वाहोद् द्रुताय स्वाहा । |
| 24.10.b | शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा ।४।। |
| 24.11.a | जवाय स्वाहा बलाय स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहा । |
| 24.11.b | विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहा ।।५।। |
| 24.12.a | ईक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा । |

इन्द्राय । स्वाहा । बृहस्पतये । स्वाहा । मित्राय । स्वाहा । वरुणाय *। स्वाहा ।।१।।२।।२१-९=१२।।

हिङ्कारायेति हिम् = काराय । स्वाहा । हिङ्कृता येति हिम् = कृताय । स्वाहा । क्रन्दते । स्वाहा । अवक्रन्दायेत्यव = क्रन्दाय । स्वाहा । प्रोथते । स्वाहा । प्रप्रोथायेति प्र = प्रोथाय । स्वाहा । गन्धाय । स्वाहा । घ्राताय । स्वाहा ।।१।। निविष्टा येति नि = विष्टाय । स्वाहा । उपविष्टा येत्युप = विष्टाय । स्वाहा । सन्दिता येति सं = दिताय । स्वाहा । वल्गते । स्वाहा । आसीनाय । स्वाहा । शयानाय । स्वाहा । स्वपते । स्वाहा । जाग्रते । स्वाहा ।।२।। कूजते । स्वाहा । प्रबुद्धा येति प्र = बुद्धाय । स्वाहा । विजृम्भमाणा येति वि = जृम्भमाणाय । स्वाहा । विचृत्ता येति वि = चृत्ताय । स्वाहा । सꣳहाना येति सं = हानाय । स्वाहा । उपस्थिता येत्युप = स्थिताय । स्वाहा । आयना येत्या = अयनाय । स्वाहा । (प्रायणाय । प्रायना येतिप्र = अयनाय )। स्वाहा ।।३।। यते । स्वाहा । धावते । स्वाहा । उद्रावायेत्युत् = द्रावाय । स्वाहा । उद्रुता येत्युत् = द्रुताय । स्वाहा । शूकाराय । स्वाहा । शूकृताय । स्वाहा । (निषण्णाय । निसन्ना येति नि = सन्नाय )। स्वाहा । उत्थिताय । स्वाहा ।।४।। जवाय । स्वाहा । बलाय । स्वाहा । विवर्तमाना येति वि = वर्तमानाय । स्वाहा । विवृत्ता येति वि = वृत्ताय । स्वाहा । विधून्वानायेति वि = धून्वानाय । स्वाहा । विधूता येति वि = धूताय । स्वाहा । शुश्रूषमाणाय । स्वाहा । शृण्वते । स्वाहा ।।५।। ईक्षमाणाय । स्वाहा । ईक्षिताय । स्वाहा । वीक्षिता येति वि = ईक्षिताय । स्वाहा । निमेषायेति नि = मेषाय । स्वाहा ।

| | |
|---|---|
| 24.12.b | यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मूत्रङ् करोति तस्मै स्वाहा कुर्वते स्वाहा कृताय स्वाहा ।।६।।(३) |

| | |
|---|---|
| 24.13.a | तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । |
| 24.13.b | धियो यो न : प्रचोदयात् ।।१।। |
| 24.14.a | हिरण्यपाणि मूतये सवितार मुपह्वये । |
| 24.14.b | स चेत्ता देवता पदम् ।।२।। |
| 24.15.a | देवस्य चेततो महीम् प्र सवितुर्हवामहे । |
| 24.15.b | सुमतिꣳ सत्यराधसम् ।।३।। |
| 24.16.a | सुष्टुतिꣳ सुमतीवृधो रातिꣳसवितुरीमहे । |
| 24.16.b | प्र देवाय मतीविदे ।।४।। |
| 24.17.a | रातिꣳ सत्पतिम् महे सवितार मुपह्वये । |
| 27.17.b | आसवं देववीतये ।।५।। |
| 24.18.a | देवस्य सवितु र्मतिमासवँ विश्वदेव्यम् । |
| 24.18.b | धिया भगम् मनामहे ।।६।। |
| 24.19.a | अग्निꣳ स्तोमेन बोधय समिधानो अमर्त्यम् । |
| 24.19.b | हव्या देवेषु नो दधत् ।।७।। |
| 24.20.a | स हव्यवा ळमर्य उशिग् दूतश्चनोहित : । |

यत् । अत्ति । तस्मै । स्वाहा । यत् । पिबति । तस्मै । स्वाहा । यत् । मूत्रम् । करोति । तस्मै । स्वाहा । कुर्वते । स्वाहा । कृताय *। स्वाहा ।।६।।३।।१०५-५३=५२।।

तत् । सवितु : । वरेण्यम् । भर्ग : । देवस्य । धीमहि *। धिय : । य : । न : । प्रचोदया दिति प्र = चोदयात् *।।१।। हिरण्यपाणि मिति हिरण्य = पाणिम् । ऊतये । सवितारम् । उप । ह्वये *। स : । चेत्ता । देवता । पदम् *।।२।। देवस्य । चेतत : । महीम् । प्र । सवितु : । हवामहे *। सुमति मिति सु = मतिम् । सत्यराधस मिति सत्य = राधसम् *।।३।। (सुष्टुतिम् । सुस्तुतिमिति सु = स्तुतिम् )। (सुमतीवृध : । सुमतिवृध इति सुमति = वृध : )। रातिम् । सवितु : । ईमहे *। प्र । देवाय । (मतीविदे । मतिविद इति मति = विदे )*।।४।। रातिम् । सत्पति मिति सत् = पतिम् । महे । सवितारम् । उप । ह्वये *। आसवमित्या = सवम् । देववीतय इति देव = वीतये *।।५।। देवस्य । सवितु : । मतिम् । आसवमित्या = सवम् । विश्वदेव्य मिति विश्व = देव्यम् *। धिया । भर्गम् । मनामहे *।।६।। अग्निम् । स्तोमेन । बोधय । समिधान इति सं = इधान : । अमर्त्यम् *। हव्या । देवेषु । न : । दधत् *।।७।। स : । हव्यवाळिति हव्य = वाट् । अमर्त्य : । उशिक् । दूत : । चनोहित इति चन : = हित : *।

| | |
|---|---|
| 24.20.b | अग्नि र्धिया समृण्वति ।।८।। |
| 24.21.a | त न्त्वा घृतस्न ईमहे चित्रभानो स्वर्विदम् । |
| 24.21.b | देवाँ (२) - आ वीतये वह ।।९।। |
| 24.22.a | अग्निन् दूतम् पुरो दधे हव्यवाह मुप ब्रुवे । |
| 24.22.b | देवाँ (२) - आ सादया दिह ।।१०।।(४) |

| | |
|---|---|
| 24.23.a | अजीजनो हि पवमान सूर्यं विधारे शक्मना पय : । |
| 24.23.b | गोजीरया रꣳहमाण : पुरन्ध्या ।।१।।(५) |

| | |
|---|---|
| 24.24.a | विभू र्मात्रा प्रभू : पित्राऽश्वोऽसि हयो ऽस्यत्योऽसि मयोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि । |
| 24.24.b | ययु र्नामासि शिशु र्नामास्यादित्यानां पत्वान्विहि ।।१।। |
| 24.25.a | देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितꣳ रक्षत । |
| 24.25.b | इह रन्तिरिह रमतामिह धृतिरिह स्वधृति : स्वाहा ।।२।।(६) |

| | |
|---|---|
| 24.26.a | काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा । |
| 24.26.b | स्वाहाऽऽधिमाधीताय स्वाहा मन : प्रजापतये स्वाहा चित्तँ विज्ञाताय ।।१।। |

अग्नि : । धिया । सम् । ऋण्वति *।।८।। तम् । त्वा । घृतस्नो इति घृत = स्नो । ईमहे । चित्रभानो इति चित्र = भानो । स्वर्विद मिति स्व : = विदम् *। देवान् । आ । वीतये । वह *।।९।। अग्निम् । दूतम् । पुर : । दधे । हव्यवाह मिति हव्य = वाहम् । उप । ब्रुवे *। देवान् । आ । सादयात् । इह *।।१०।।४।।९१-१०= ८१।।

अजीजन : । हि । पवमान । सूर्यम् । विधार इति वि = धारे । शक्मना । पय : *। गोजी रयेति गो = जीरया । रंहमाण : । पुरन्ध्येति पुरम् = ध्या *।।१।। ५।।१०-०=१०।।

विभू रिति वि = भू : । मात्रा । प्रभू रिति प्र = भू : । पित्रा । अश्व : । असि । हय : । असि । अत्य : । असि । मय : । असि । अर्वा । असि । सप्ति : । असि । वाजी । असि । वृषा । असि । (नृमणा : । नृमना इति नृ = मना : )। असि । ययु : । नाम । असि । शिशु : । नाम । असि । आदित्यानाम् । पत्व । अनु । इहि ।।१।। देवा : । आशापाला इत्याशा = पाला : । एतम् । देवेभ्य : । अश्वम् । मेधाय । प्रोक्षित मिति प्र = उक्षितम् । रक्षत *। इह । रन्ति : । इह । रमताम् । इह । धृति : । इह । स्वधृति रिति स्व = धृति : । स्वाहा *।।२।।६।।४९-१०=३९।।

काय । स्वाहा । कस्मै । स्वाहा । कतमस्मै । स्वाहा । स्वाहा । आधिमित्या = धिम् । आधीता येत्या = धीताय । स्वाहा । मन : । प्रजापतय इति प्रजा = पतये । स्वाहा । चित्तम् । विज्ञाता येति वि = ज्ञाताय ।।१।।

| | |
|---|---|
| 24.27.a | अदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृळीकायै स्वाहा । |
| 24.27.b | सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा ।।२।। |
| 24.28.a | पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा । |
| 24.28.b | त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा । |
| 24.28.c | विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा ।।३।। |
| 24.29.a | विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । |
| 24.29.b | विश्वो राय इषुध्यति द्युम्नँ वृणीत पुष्यसे स्वाहा ।।४।।(७) |

| | |
|---|---|
| 24.30.a | आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्य : । |
| 24.30.b | शूर इषव्यो ऽतिव्याधी महारथो जायताम् ।।१।। |
| 24.31.a | दोग्ध्री धेनुर्वोळ्हाऽनड्वा नाशु : सप्ति : पुरन्धि र्योषा । |
| 24.31.b | जिष्णू रथेष्ठा : सभेयो युवाऽऽस्य यजमानस्य वीरो जायताम् ।।२।। |
| 24.32.a | निकामेनिकामे न : पर्जन्यो वर्षतु फलवत्यो न ओषधय : पच्यन्ताम् । |
| 24.32.b | योगक्षेमो न : कल्पताम् ।।३।।(८) |

अदित्यै । स्वाहा । अदित्यै । मह्यै । स्वाहा । अदित्यै । सुमृळीकाया इति सु = मृळीकायै । स्वाहा । सरस्वत्यै । स्वाहा । सरस्वत्यै । पावकायै । स्वाहा । सरस्वत्यै । बृहत्यै । स्वाहा ।।२।। पूष्णे । स्वाहा । पूष्णे । प्रपथ्यायेति प्र = पथ्याय । स्वाहा । पूष्णे । नरन्धिषाय । स्वाहा । त्वष्ट्रे । स्वाहा । त्वष्ट्रे । तुरीपाय । स्वाहा । त्वष्ट्रे । पुरुरूपा येति पुरु = रूपाय । स्वाहा । विष्णवे । स्वाहा । विष्णवे । निभूयपायेति निभूय = पाय । स्वाहा । विष्णवे । शिपिविष्टायेति शिपि = विष्टाय *। स्वाहा ।।३।। विश्व : । देवस्य । नेतु : । मर्त : । वुरीत । सख्यम् *। विश्व : । राये । इषुध्यति । द्युम्नम् । वृणीत । पुष्यसे । स्वाहा *।।४।।७।।६८-४४=२४।।

आ । ब्रह्मन् । ब्राह्मण : । ब्रह्मवर्चसीति ब्रह्म = वर्चसी । जायताम् । आ । राष्ट्रे । राजन्य : । शूर : । इषव्य : । अतिव्याधीत्यति = व्याधी । महारथ इति महा = रथ : । जायताम् ।।१।। दोग्ध्री । धेनु : । वोळ्हा । अनड्वान् । आशु : । सप्ति : । पुरन्धि रिति पुरम् = धि : । योषा । जिष्णु : । (रथेष्ठा : । रथेस्था इति रथे = स्था : )। सभेय : । युवा । आ । अस्य । यजमानस्य । वीर : । जायताम् ।।२।। निकामेनिकाम इति निकामे = निकामे । न : । पर्जन्य : । वर्षतु । फलवत्य इति फल = वत्य : । न : । ओषधय : । पच्यन्ताम् । योगक्षेम इति योग = क्षेम : । न : । कल्पताम् *।।३।।८।।४१-०=४१।।

| | |
|---|---|
| 24.33.a | प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा । |
| 24.33.b | चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥१॥(९) |

| | |
|---|---|
| 24.34.a | प्राच्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा । |
| 24.34.b | प्रतीच्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा । |
| 24.34.c | ऊर्ध्वायै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहाऽवाच्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा ॥१॥(१०) |

| | |
|---|---|
| 24.35.a | अद्भ्य : स्वाहा वार्भ्य : स्वाहोदकाय स्वाहा तिष्ठन्तीभ्य : स्वाहा स्रवन्तीभ्य : स्वाहा स्यन्दमानाभ्य : स्वाहा । |
| 24.35.b | कूप्याभ्य : स्वाहा सूद्याभ्य : स्वाहा धार्याभ्य : स्वाहाऽर्णवाय स्वाहा समुद्राय स्वाहा सरिराय स्वाहा ॥१॥(११) |

| | |
|---|---|
| 24.36.a | वाताय स्वाहा धूमाय स्वाहाऽभ्राय स्वाहा मेघाय स्वाहा विद्योतमानाय स्वाहा स्तनयते स्वाहा । |
| 24.36.b | अवस्फूर्जते स्वाहा वर्षते स्वाहाऽववर्षते स्वाहोग्रँ वर्षते स्वाहा शीघ्रँ वर्षते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा । |

प्राणाय । स्वाहा । अपानायेत्यप = आनाय । स्वाहा । व्यानायेति वि = आनाय । स्वाहा । चक्षुषे । स्वाहा । श्रोत्राय । स्वाहा । वाचे । स्वाहा । मनसे *। स्वाहा ।।१।।९।।१४-७=७।।

प्राच्यै । दिशे । स्वाहा । अर्वाच्यै । दिशे । स्वाहा । दक्षिणायै । दिशे । स्वाहा । अर्वाच्यै । दिशे । स्वाहा । प्रतीच्यै । दिशे । स्वाहा । अर्वाच्यै । दिशे । स्वाहा । उदीच्यै । दिशे । स्वाहा । अर्वाच्यै । दिशे । स्वाहा । ऊर्ध्वायै । दिशे । स्वाहा । अर्वाच्यै । दिशे । स्वाहा । अवाच्यै । दिशे । स्वाहा । अर्वाच्यै । दिशे *। स्वाहा ।।१।।१०।।३६-२६=१०।।

अद्भ्य इत्यत् = भ्य : । स्वाहा । वार्भ्य इति वा : = भ्य : । स्वाहा । उदकाय । स्वाहा । तिष्ठन्तीभ्य : । स्वाहा । स्रवन्तीभ्य : । स्वाहा । स्यन्दमानाभ्य : । स्वाहा । कूप्याभ्य : । स्वाहा । सूद्याभ्य : । स्वाहा । धार्याभ्य : । स्वाहा । अर्णवाय । स्वाहा । समुद्राय । स्वाहा । सरिराय *। स्वाहा ।।१।।११।।२४-१२=१२।।

वाताय । स्वाहा । धूमाय । स्वाहा । अभ्राय । स्वाहा । मेघाय । स्वाहा । विद्योतमाना येति वि = द्योतमानाय । स्वाहा । स्तनयते । स्वाहा । अवस्फूर्जत इत्यव = स्फूर्जते । स्वाहा । वर्षते । स्वाहा । अववर्षत इत्यव = वर्षते । स्वाहा । उग्रम् । वर्षते । स्वाहा । शीघ्रम् । वर्षते । स्वाहा । उद्गृण्हत इत्युत् = गृण्हते । स्वाहा । उद्गृहीता येत्युत् = गृहीताय । स्वाहा ।

| | |
|---|---|
| 24.36.c | प्रश्नते स्वाहा शीकायते स्वाहा प्रुष्वाभ्य : स्वाहा ह्लादुनीभ्य : स्वाहा नीहाराय स्वाहा ।।१।।(१२) |

| | |
|---|---|
| 24.37.a | अग्नयेस्वाहा सोमाय स्वाहेन्द्रायस्वाहा पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा । |
| 24.37.b | दिवे स्वाहा दिग्भ्य : स्वाहाऽशाभ्य : स्वाहोर्व्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा ।।१।।(१३) |

| | |
|---|---|
| 24.38.a | नक्षत्रेभ्य : स्वाहा नक्षत्रियेभ्य : स्वाहाऽहोरात्रेभ्य : स्वाहाऽर्धमासेभ्य : स्वाहा । |
| 24.38.b | मासेभ्य : स्वाह ऋतुभ्य : स्वाहाऽऽर्तवेभ्य : स्वाहा सँवत्सराय स्वाहा द्यावापृथिवीभ्याᳬ स्वाहा ।।१।। |
| 24.39.a | चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्य : स्वाहा वसुभ्य : स्वाहा । |
| 24.39.b | रुद्रेभ्य : स्वाहाऽऽदित्येभ्य : स्वाहा मरुद्भ्य : स्वाहा विश्वेभ्यो देवेभ्य : स्वाहा ।।२।।(१४) |

| | |
|---|---|
| 24.40.a | मूलेभ्य : स्वाहा शाखाभ्य : स्वाहा वनस्पतिभ्य : स्वाहा । |
| 24.40.b | पुष्पेभ्य : स्वाहा फलेभ्य : स्वाहौषधीभ्य : स्वाहा ।।१।।(१५) |

| | |
|---|---|
| 24.41.a | पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा । |
| 24.41.b | चन्द्राय स्वाहा नक्षत्रेभ्य : स्वाहाऽद्भ्य : स्वाहौषधीभ्य : स्वाहा । |

प्रश्नते । स्वाहा । शीकायते । स्वाहा । प्रुष्वाभ्यः । स्वाहा । ह्लादुनीभ्य : । स्वाहा । नीहाराय *। स्वाहा ।।१।।१२।।३८-२०=१८।।

अग्नये । स्वाहा । सोमाय । स्वाहा । इन्द्राय । स्वाहा । पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । दिग्भ्य इति दिक् = भ्य : । स्वाहा । आशाभ्य : । स्वाहा । उर्व्यै । दिशे । स्वाहा । अर्वाच्यै । दिशे *। स्वाहा ।।१।।१३।।२२-११=११।।

नक्षत्रेभ्य : । स्वाहा । नक्षत्रियेभ्य : । स्वाहा । अहोरात्रेभ्य : । स्वाहा । अर्धमासेभ्य इत्यर्ध = मासेभ्य : । स्वाहा । मासेभ्य : । स्वाहा । ऋतुभ्य इत्यृतु = भ्य : । स्वाहा । आर्तवेभ्य : । स्वाहा । सँवत्सराय । स्वाहा । द्यावापृथिवीभ्याम् । स्वाहा ।।१।। चन्द्राय । स्वाहा । सूर्याय । स्वाहा । रश्मिभ्य इति रश्मि = भ्य : । स्वाहा । वसुभ्य इति वसु = भ्य : । स्वाहा । रुद्रेभ्य : । स्वाहा । आदित्येभ्यः । स्वाहा । मरुद्भ्य इति मरुत् = भ्य : । स्वाहा । विश्वेभ्य : । देवेभ्य : *। स्वाहा ।।२।।१४।।३५-१७=१८।।

मूलेभ्य : । स्वाहा । शाखाभ्य : । स्वाहा । वनस्पतिभ्य इति वनस्पति = भ्य : । स्वाहा । पुष्पेभ्य : । स्वाहा । फलेभ्य : । स्वाहा । ओषधीभ्य : *। स्वाहा ।।१।।१५।।१२-६=६।।

पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । सूर्याय । स्वाहा । चन्द्राय । स्वाहा । नक्षत्रेभ्य : । स्वाहा । अद्भ्य इत्यत् = भ्य : । स्वाहा । ओषधीभ्य : । स्वाहा ।

| | |
|---|---|
| 24.41.c | वनस्पतिभ्य : स्वाहा परिप्लवेभ्य : स्वाहा चराचरेभ्य : स्वाहा सरीसृपेभ्य : स्वाहा ॥१॥(१६) |

| | |
|---|---|
| 24.42.a | असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा । |
| 24.42.b | गणश्रिये स्वाहा गणपतये स्वाहाऽभिभुवे स्वाहाऽधिपतये स्वाहा ॥१॥ |
| 24.43.a | शूषाय स्वाहा सꣳसर्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा । |
| 24.43.b | मलिम्लुचाय स्वाहा दिवा पतयते स्वाहा ॥२॥(१७) |

| | |
|---|---|
| 24.44.a | मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा । |
| 24.44.b | नभसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा । |
| 24.44.c | सहसेस्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहाऽꣳहसस्पतये स्वाहा ॥१॥(१८) |

| | |
|---|---|
| 24.45.a | वाजाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा । |
| 24.45.b | स्व : स्वाहा मूर्ध्ने स्वाहा व्यश्नुविने स्वाहा । |
| 24.45.c | अन्त्याय स्वाहाऽऽन्त्यायनाय स्वाहा भौवनाय स्वाहा भुवनस्य पतये स्वाहाऽधिपतये स्वाहा प्रजापतये स्वाहा ॥१॥(१९) |

वनस्पतिभ्य इति वनस्पति = भ्य : । स्वाहा । परिप्लवेभ्य इति परि = प्लवेभ्य : । स्वाहा । चराचरेभ्य : । स्वाहा । सरीसृपेभ्य : *। स्वाहा ।।१।।१६।।२४-१२=१२।।

असवे । स्वाहा । वसवे । स्वाहा । विभुव इति वि = भुवे । स्वाहा । विवस्वते । स्वाहा । गणश्रिय इति गण = श्रिये । स्वाहा । गणपतय इति गण = पतये । स्वाहा । अभिभुव इत्यभि = भुवे । स्वाहा । अधिपतय इत्यधि = पतये । स्वाहा ।।१।। शूषाय । स्वाहा । सꣳसर्पयेति सं = सर्पाय । स्वाहा । चन्द्राय । स्वाहा । ज्योतिषे । स्वाहा । मलिम्लुचाय । स्वाहा । दिवा । पतयते । स्वाहा ।।२।।१७।।२९-१४=१५।।

मधवे । स्वाहा । माधवाय । स्वाहा । शुक्राय । स्वाहा । शुचये । स्वाहा । नभसे । स्वाहा । नभस्याय । स्वाहा । इषाय । स्वाहा । ऊर्जाय । स्वाहा । सहसे । स्वाहा । सहस्याय । स्वाहा । तपसे । स्वाहा । तपस्याय । स्वाहा । (अꣳहसस्पतये । अꣳहस : पतय इत्यꣳहस : = पतये)*। स्वाहा ।।१।।१८।। २६-१३=१३।।

वाजाय । स्वाहा । प्रसवायेति प्र = सवाय । स्वाहा । अपिजायेत्यापि = जाय । स्वाहा । क्रतवे । स्वाहा । स्व : । स्वाहा । मूर्ध्ने । स्वाहा । व्यश्नुविन इति वि = अश्नुविने । स्वाहा । अन्त्याय । स्वाहा । आन्त्यायनायेत्यान्त्य = आयनाय । स्वाहा । भौवनाय । स्वाहा । भुवनस्य । पतये । स्वाहा । अधिपतय इत्यधि = पतये । स्वाहा । प्रजापतय इति प्रजा = पतये *। स्वाहा ।।१।।१९।।२७-१३=१४।।

| | |
|---|---|
| 24.46.a | आयु र्यज्ञेन कल्पता१ॅ स्वाहा प्राणो यज्ञेन कल्पता१ॅ स्वाहाऽपानो यज्ञेन कल्पता१ॅ स्वाहा व्यानो यज्ञेन कल्पता१ॅ स्वाहा । |
| 24.46.b | उदानो यज्ञेन कल्पता१ॅ स्वाहा समानो यज्ञेन कल्पता१ॅ स्वाहा चक्षु र्यज्ञेन कल्पता१ॅ स्वाहा श्रोत्रँ य्यज्ञेन कल्पता१ॅ स्वाहा । |
| 24.46.c | वाग् यज्ञेन कल्पता१ॅ स्वाहा मनो यज्ञेन कल्पता१ॅ स्वाहाऽत्मा यज्ञेन कल्पता१ॅ स्वाहा पृष्ठँ य्यज्ञेन कल्पता१ॅ स्वाहा । |
| 24.46.d | ब्रह्म यज्ञेन कल्पता१ॅ स्वाहा यज्ञो यज्ञेन कल्पता१ॅ स्वाहा ज्योति र्यज्ञेन कल्पता१ॅ स्वाहा स्व र्यज्ञेन कल्पता१ॅ स्वाहा ।।१।।(२०) |

| | |
|---|---|
| 24.47.a | एकस्मै स्वाहा द्वाभ्या१ॅ स्वाहा शताय स्वाहैकशताय स्वाहा । |
| 24.47.b | व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ।।१।। (२१) |

तेजोऽसि पञ्च ।।५।। अग्नय एका ।।१।। हिङ्काराय षट् ।।६।। तत्सवितुर्दश ।।१०।। अजीजनो ह्येका ।।१।। विभूर्द्वे ।।२।। काय चतस्र : ।।४।। आब्रह्मन् तिस्र : ।।३।। प्राणायैका ।।१।। प्राच्यायैका ।।१।। अद्भ्य एका ।।१।। वातायैका ।।१।। अग्नय इत्येका ।।१।। नक्षत्रेभ्यो द्वे ।।२।। मूलेभ्य एका ।।१।। पृथिव्या एका ।।११।। असवे द्वे ।।२।। मधव एका ।।१।। वाजायैका ।।१।। आयुर्यज्ञेनैका ।।१।। एकस्मा इत्येका ।।१।। एकविंशत्यनुवाकेषु सप्तचत्वारिंशत् ।।४७।।

## ।। इति शुक्लयजु : काण्वसंहितायां चतुर्विंशोऽध्याय : ।।

आयु : । यज्ञेन । कल्पताम् । स्वाहा । प्राण : । यज्ञेन । कल्पताम् । स्वाहा । अपान इत्यप = आन : । यज्ञेन । कल्पताम् । स्वाहा । व्यान इति वि = आनः । यज्ञेन । कल्पताम् । स्वाहा । उदान इत्युत् = आन : । यज्ञेन । कल्पताम् । स्वाहा । समान इति सम् = आन : । यज्ञेन । कल्पताम् । स्वाहा । चक्षु : । यज्ञेन । कल्पताम् । स्वाहा । श्रोत्रम् । यज्ञेन । कल्पताम् । स्वाहा । वाक् । यज्ञेन । कल्पताम् । स्वाहा । मन : । यज्ञेन । कल्पताम् । स्वाहा । आत्मा । यज्ञेन । कल्पताम् । स्वाहा । पृष्ठम् । यज्ञेन । कल्पताम् । स्वाहा । ब्रह्म । यज्ञेन । कल्पताम् । स्वाहा । यज्ञ : । यज्ञेन । कल्पताम् । स्वाहा । ज्योति : । यज्ञेन । कल्पताम् । स्वाहा । स्व : । यज्ञेन । कल्पताम् *। स्वाहा ।।१।।२०।।६४-४४=२०।।

एकस्मै । स्वाहा । द्वाभ्याम् । स्वाहा । शताय । स्वाहा । एकशता येत्येक = शताय । स्वाहा । व्युष्ट्या इति वि = उष्टयै । स्वाहा । स्वर्गायेति स्व : = गाय । स्वाहा *।।१।।२१।।१२-५=७।। आहत्य पद संख्या ।।८५३-३४९=५०४।।

## इतिचतुर्विंशोऽध्याय :

# ।। इतिचतुर्विंशोऽध्याय : ।।

| Adhyaya | 24 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 105 | 23 | 82 |
| 2 | 21 | 9 | 12 |
| 3 | 105 | 53 | 52 |
| 4 | 91 | 10 | 81 |
| 5 | 10 | 0 | 10 |
| 6 | 49 | 10 | 39 |
| 7 | 68 | 44 | 24 |
| 8 | 41 | 0 | 41 |
| 9 | 14 | 7 | 7 |
| 10 | 36 | 26 | 10 |
| 11 | 24 | 12 | 12 |
| 12 | 38 | 20 | 18 |
| 13 | 22 | 11 | 11 |
| 14 | 35 | 17 | 18 |
| 15 | 12 | 6 | 6 |
| 16 | 24 | 12 | 12 |
| 17 | 29 | 14 | 15 |
| 18 | 26 | 13 | 13 |
| 19 | 27 | 13 | 14 |
| 20 | 64 | 44 | 20 |
| 21 | 12 | 5 | 7 |
| Total | 853 | 349 | 504 |

# अथ पञ्च विंशोऽध्याय :

| | |
|---|---|
| 25.1.a | हिरण्यगर्भ : समवर्तताग्रे भूतस्य जात : पतिरेक आसीत् । |
| 25.1.b | स दाधार पृथिवी न्द्यामुतेमां कस्मै देवाय हविषा विधेम ।।१।। |
| 25.2.a | उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टङ् गृह्णाम्येष ते योनि : सूर्यस्ते महिमा । |
| 25.2.b | यस्तेऽहन्त्सँवत्सरे महिमा सम्बभूव यस्ते वाया अन्तरिक्षे महिमा सम्बभूव । |
| 25.2.c | यस्ते दिवि सूर्ये महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये स्वाहा देवेभ्य : ।।२।।(१) |

| | |
|---|---|
| 25.3.a | य : प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । |
| 25.3.b | य ईशे अस्य द्विपद श्चतुष्पद : कस्मै देवाय हविषा विधेम ।।१।। |
| 25.4.a | उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टङ् गृह्णाम्येष ते योनि श्चन्द्रमास्ते महिमा । |
| 25.4.b | यस्ते रात्रौ सँवत्सरे महिमा सम्बभूव यस्ते पृथिव्या मग्नौ महिमा सम्बभूव । |
| 25.4.c | यस्ते नक्षत्रेषु चन्द्रमसि महिमा सम्बभूव तस्मै ते महिम्ने प्रजापतये देवेभ्य : स्वाहा ।।२।।(२) |

# अथ पञ्चविंशोऽध्याय :

ॐ हिरण्यगर्भ इति हिरण्य = गर्भ : । सम् । अवर्तत । अग्रे । भूतस्य । जात : । पति : । एक : । आसीत् ✱। स : । दाधार । पृथिवीम् । द्याम् । उत । इमाम् । कस्मै । देवाय । हविषा । विधेम ✱।।१।। उपयामगृहीत इत्युपयाम = गृहीत : । असि । प्रजापतय इति प्रजा = पतये । त्वा । जुष्टम् । गृण्हामि । एष : । ते । योनि : । सूर्य : । ते । महिमा । य : । ते । अहन् । सँवत्सरे । महिमा । संबभूवेति सं = बभूव । य : । ते । वायौ । अन्तरिक्षे । महिमा । संबभूवेति सं = बभूव । य : । ते । दिवि । सूर्ये । महिमा । संबभूवेति सं = बभूव । तस्मै । ते । महिम्ने । प्रजापतय इति प्रजा = पतये । स्वाहा । देवेभ्य : ✱।।२।।१।।५५-२९=२६।।

य : । प्राणत : । निमिषत इति नि = मिषत : । महित्वेति महि = त्वा । एक : । इत् । राजा । जगत : । बभूव ✱। य : । ईशे । अस्य । द्विपद इति द्वि = पद : । (चतुष्पद : । चतु : पद इति चतु : = पद : )। कस्मै । देवाय । हविषा । विधेम ✱।।१।। उपयामगृहीत इत्युपयाम = गृहीत : । असि । प्रजापतय इति प्रजा = पतये । त्वा । जुष्टम् । गृण्हामि । एष : । ते । योनि : । चन्द्रमा : । ते । महिमा । य : । ते । रात्रौ । सँवत्सरे । महिमा । सँबभूवेति सं = बभूव । य : । ते । पृथिव्याम् । अग्नौ । महिमा । सँबभूवेति सं = बभूव । य : । ते । नक्षत्रेषु । चन्द्रमसि । महिमा । संबभूवेति सं = बभूव । तस्मै । ते । महिम्ने । प्रजापतय इति प्रजा = पतये । देवेभ्य : । स्वाहा ✱।।२।।२।।५४-१७=३७।।

| | |
|---|---|
| 25.5.a | युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुष : । |
| 25.5.b | रोचन्ते रोचना दिवि ।।१।। |
| 25.6.a | युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । |
| 25.6.b | शोणा धृष्णू नृवाहसा ।।२।। |
| 25.7.a | यद्वातो अपो अगनीगन् प्रियामिन्द्रस्य तन्वम् । |
| 25.7.b | एतꣳ स्तोत रनेन पथा पुन रश्वमा वर्तयासि न : ।।३।। |
| 25.8.a | वसवस्त्वाऽञ्जन्तु गायत्रेण च्छन्दसा रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन च्छन्दसा । |
| 25.8.b | आदित्यास्त्वाऽञ्जन्तु जागतेन च्छन्दसा ।।४।। |
| 25.9.a | भू र्भुव : स्वर्लाजी (३) - ञ्छाची (३) - न्यव्ये गव्ये । |
| 25.9.b | एतदन्नमत्त देवा एतदन्नमद्धि प्रजापते ।।५।। |
| 25.10.a | क : स्विदेकाकी चरति क उ स्विज्ञायते पुन : । |
| 25.10.b | किꣳ स्विद् धिमस्य भेषजङ् किम्वावपनम् महत् ।।६।। |
| 25.11.a | सूर्य एकाकी चरति चन्द्रमा जायते पुन : । |
| 25.11.b | अग्नि र्हिमस्य भेषजं भूमिरावपनं महत् ।।७।। |
| 25.12.a | कास्विदासीत् पूर्वचित्ति : किꣳ स्विदासीद् बृहद्वय : । |
| 25.12.b | का स्विदासीत् पिलिप्पिला का स्विदासीत् पिशङ्गिला ।।८।। |
| 25.13.a | द्यौरासीत् पूर्वचित्ति रश्व आसीद् बृहद्वय : । |

युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुष : *। रोचन्ते । रोचना ।
दिवि *।।१।। युञ्जन्ति । अस्य । काम्या । हरी हति हरी । विपक्ष सेति वि =
पक्षसा । रथे *। शोणा । धृष्णू इति धृष्णू । नृवाह सेति नृ = वाहसा *।।२।।
यत् । वात : । अप : । अगनीगन् । प्रियाम् । इन्द्रस्य । तन्वम् *। एतम् ।
स्तोत : । अनेन । पथा । पुन : । अश्वम् । आ । वर्तयासि । न : *।।३।।
वसव : । त्वा । अञ्जन्तु । गायत्रेण । छन्दसा । रुद्रा : । त्वा । अञ्जन्तु ।
(त्रैष्टुभेन । त्रैस्तुभे नेति त्रैस्तुभेन )। छन्दसा । आदित्या : । त्वा । अञ्जन्तु ।
जागतेन । छन्दसा ।।४।। भू : । भुव : । स्व : । लाजी(३)न् । शाची(३)न् ।
यव्ये । गव्ये । एतत् । अन्नम् । अत्त । देवा : । एतत् । अन्नम् । अद्धि ।
प्रजापत इति प्रजा = पते *।।५।। क : । स्वित् । एकाकी । चरति । क : ।
ऊँइत्यूँ । स्वित् । जायते । पुन रिति पुन : *। किम् । स्वित् । हिमस्य ।
भेषजम् । किम् । ऊँइत्यूँ । आवपन मित्या = वपनम् । महत् *।।६।। सूर्य : ।
एकाकी । चरति । चन्द्रमा : । जायते । पुन रिति पुन : *। अग्नि : । हिमस्य ।
भेषजम् । भूमि : । आवपन मित्या = वपनम् । महत् *।।७।। का । स्वित् ।
आसीत् । पूर्वचित्ति रिति पूर्व = चित्ति : । किम् । स्वित् । आसीत् । बृहत् ।
वय : *। का । स्वित् । आसीत् । पिलिप्पिला । का । स्वित् । आसीत् ।
पिशङ्गिला *।।८।। द्यौ : । आसीत् । पूर्वचित्ति रिति पूर्व = चित्ति : । अश्व : ।
आसीत् । बृहत् । वय : *।

| | |
|---|---|
| 25.13.b | अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला ।।९।।(३) |

| | |
|---|---|
| 25.14.a | वायुष्ट्वा पचतैरवत्वसितग्रीव श्छागै : । |
| 25.14.b | न्यग्रोधश्चमसै : शल्मलि वृद्ध्या ।।१।। |
| 25.15.a | एषस्य राथ्यो वृषा पड्भि श्चतुर्भि रेदगन् । |
| 25.15.b | ब्रह्माऽकृष्णश्च नोऽवतु नमोऽग्नये ।।२।। |
| 25.16.a | सꣳशितो रश्मिना रथ : सꣳशितो रश्मिना हय : । |
| 25.16.b | सꣳशितो अप्स्वप्सुजा ब्रह्मा सोमपुरोगव : ।।३।। |
| 25.17.a | स्वयँ वाजिꣳ स्तन्वङ् कल्पयस्व स्वयँ य्यजस्व स्वयं जुषस्व । |
| 25.17.b | महिमा तेऽन्येन न सन्नशे ।।४।। |
| 25.18.a | न वा उ एतन् म्रियसे न रिष्यसि देवाँ(२)- इदेषि पथिभि : सुगेभि :। |
| 25.18.b | यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देव : सविता दधातु ।।५।। |
| 25.19.a | अग्नि : पशुरासीत् तेनायजन्त स एतँ ल्लोकमजय द्यस्मिन्नग्नि : । |
| 25.19.b | स ते लोको भविष्यति तं जेष्यसि पिबैता अप : । |
| 25.19.c | वायु : पशुरासीत् तेनायजन्त स एतँ ल्लोकमजय द्यस्मिन् वायु : । |
| 25.19.d | स ते लोको भविष्यति तं जेष्यसि पिबैता अप : । |
| 25.19.e | सूर्य : पशुरासीत् तेनायजन्त स एतँ ल्लोकमजय द्यस्मि न्त्सूर्य : । |

अवि : । आसीत् । पिलिप्पिला । रात्रि : । आसीत् । पिशङ्गिला *।।९।।३।।
१२३-६=११७।।

वायु : । त्वा । पचतै : । अवतु । असितग्रीव इत्यसित = ग्रीव : । छागै : *।
न्यग्रोध : । चमसै : । शल्मलि : । वृद्ध्या *।।१।। एष : । स्य : । राथ्य : ।
वृषा । पड्भि रिति पट् = भि : । चतुर्भि रिति चतु : = भि : । आ । इत् ।
अगन् *। ब्रह्मा । अकृष्ण : । च । न : । अवतु । नम : । अग्नये *।।२।।
सꣳशित इति सं = शित : । रश्मिना । रथ : । सꣳशित इति सं = शित : ।
रश्मिना । हय : *। सꣳशित इति सं = शित : । अप्स्वित्यप् = सु । अप्सुजा
इत्यप्सु = जा : । ब्रह्मा । सोमपुरोगव इति सोम = पुरोगव : *।।३।। स्वयम् ।
वाजिन् । तन्वम् । कल्पयस्व । स्वयम् । यजस्व । स्वयम् । जुषस्व *। महिमा ।
ते । अन्येन । न । सन्नश इति सं = नशे *।।४।। न । वै । ऊँइत्यूँ । एतत् ।
म्रियसे । न । रिष्यसि । देवान् । इत् । एषि । पथिभि रिति पथि = भि : ।
सुगेभि रिति सु = गेभि : *। यत्र । आसते । सुकृत इति सु = कृत : । यत्र ।
ते । ययु : । तत्र । त्वा । देव : । सविता । दधातु *।।५।। अग्नि : । पशु : ।
आसीत् । तेन । अयजन्त । स : । एतम् । लोकम् । अजयत् । यस्मिन् । अग्नि
: *। स : । ते । लोक : । भविष्यति । तम् । जेष्यसि । पिब । एता : । अप
: । वायु : । पशु : । आसीत् । तेन । अयजन्त । स : । एतम् । लोकम् ।
अजयत् । यस्मिन् । वायु : *। स : । ते । लोक : । भविष्यति । तम् ।
जेष्यसि । पिब । एता : । अप : । सूर्य : *। पशु : । आसीत् । तेन ।
अयजन्त । स : । एतम् । लोकम् । अजयत् । यस्मिन् । सूर्य : *।

| | |
|---|---|
| 25.19.f | स ते लोको भविष्यति तं जेष्यसि पिबैता अप : ।।६।।(४) |

| | |
|---|---|
| 25.20.a | प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा । |
| 25.20.b | अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन । |
| 25.20.c | ससस्त्यश्वक : सुभद्रिकां काम्पीलवासिनीम् ।।१।। |
| 25.21.a | गणाना न्त्वा गणपतिꣳ हवामहे प्रियाणा न्त्वा प्रियपतिꣳ हवामहे । |
| 25.21.b | निधीना न्त्वा निधिपतिꣳ हवामहे वसो मम ।।२।। |
| 25.22.a | आऽहमजानि गर्भधमा त्वमजासि गर्भधम् । |
| 25.22.b | ता उभौ चतुर : पद : संप्रसारयाव । |
| 25.22.c | स्वर्गे लोके प्रोर्ण्वाथाँ वृषा वाजी रेतोधा रेतो दधातु ।।३।।(५) |

| | |
|---|---|
| 25.23.a | उत्सक्थ्या अव गुदं धेहि समञ्जिं चारया वृषन् । |
| 25.23.b | य : स्त्रीणां जीवभोजन : ।।१।। |
| 25.24.a | यका ऽसकौ शकुन्तिकाऽऽहलगिति वञ्चति । |
| 25.24.b | आहन्ति गभे पसो निगल्गलीति धारका ।।२।। |
| 25.25.a | यकोऽसकौ शकुन्तक आहलगिति वञ्चति । |
| 25.25.b | विवक्षत इव ते मुख मध्वर्यो मा नस्त्वमभि भाषथा : ।।३।। |

स : । ते । लोक : । भविष्यति । तम् । जेष्यसि । पिब । एता : । अप : ।।६।।४।।१३३-३८=९५।।

प्राणाय । स्वाहा । अपानायेत्यप = आनाय । स्वाहा । व्यानायेति वि = आनाय । स्वाहा । अम्बे । अम्बिके । अम्बालिके । न । मा । नयति । क : । चन । ससस्ति । अश्वक : । सुभद्रिका मिति सु = भद्रिकाम् । कांपीलवासिनी मिति कांपील = वासिनीम् ।।१।। गणानाम् । त्वा । गणपति मिति गण = पतिम् । हवामहे । प्रियाणाम् । त्वा । प्रियपति मिति प्रिय = पतिम् । हवामहे । निधीनामिति नि = धीनाम् । त्वा । निधिपति मिति निधि = पतिम् । हवामहे । वसो इति वसो । मम ।।२।। आ । अहम् । अजानि । गर्भधमिति गर्भ = धम् । आ । त्वम् । अजासि । गर्भधमिति गर्भ = धम् । तौ । उभौ । चतुर : । पद : । संप्रसारया वेति सं = प्रसारयाव । स्वर्ग इति स्व : = गे । लोके । प्र । ऊर्णवाथाम् । वृषा । वाजी । रेतोधा इति रेत : = धा : । रेत : । दधातु *।।३।।५।।५४-९=४५।।

उत्सक्थ्या इत्युत् = सक्थ्या : । अव । गुदम् । धेहि । सम् । अञ्जिम् । चारय । वृषन् *। य : । स्त्रीणाम् । जीवभोजन इति जीव = भोजन : *।।१।। यका । असकौ । शकुन्तिका । आहलक् । इति । वञ्चति *। आ । हन्ति । गभे । पस : । नि । गल्गलीति । धारका *।।२।। यक : । असकौ । शकुन्तक : । आहलक् । इति । वञ्चति *। विवक्षत इवेति विवक्षत : = इव । ते । मुखम् । अध्वर्यो इत्यध्वर्यो । मा । न : । त्वम् । अभि । भाषथा : *।।३।।

| | |
|---|---|
| 25.26.a | माता च ते पिता च तेऽग्रं वृक्षस्य रोहत : । |
| 25.26.b | प्रतिलामीति ते पिता गभे मुष्टिमतꣳसयत् ।।४।। |
| 25.27.a | माता च ते पिता च तेऽग्रे वृक्षस्य क्रीळत : । |
| 25.27.b | विवक्षत इव ते मुखं ब्रह्मन्मा त्वँ वदो बहु ।।५।। |
| 25.28.a | ऊर्ध्वामेना मुच्छ्रापय गिरौ भारꣳ हरन्निव । |
| 25.28.b | अथास्यै मध्यमेधताꣳ शीते वाते पुनन्निव ।।६।। |
| 25.29.a | ऊर्ध्वमेन मुच्छ्रयताद् गिरौ भारꣳ हरन्निव । |
| 25.29.b | अथास्य मध्य मेजतु शीते वाते पुनन्निव ।।७।। |
| 25.30.a | यदस्या अꣳहुभेद्या : कृधु स्थूलमुपातसत् । |
| 25.30.b | मुष्का इदस्या एजतो गोशफे शकुला इव ।।८।। |
| 25.31.a | यद् देवासो ललामगुं प्रविष्टीमिन माविषु : । |
| 25.31.b | सक्थ्ना देदिश्यते नारी सत्यस्याक्षिभुवो यथा ।।९।। |
| 25.32.a | यद्धरिणो यवमत्ति न पुष्टम् पशु मन्यते । |
| 25.32.b | शूद्रा यदर्यजारा न पोषाय धनायति ।।१०।। |
| 25.33.a | यद्धरिणो यवमत्ति न पुष्टम् बहु मन्यते । |
| 25.33.b | शूद्रो यदर्यायै जारो न पोष मनु मन्यते ।।११।। |
| 25.34.a | दधिक्राव्णो अकारिषञ् जिष्णो रश्वस्य वाजिन : । |

माता । च । ते । पिता । च । ते । अग्रम् । वृक्षस्य । रोहत : ✱। प्र । तिलामि । इति । ते । पिता । गभे । मुष्टिम् । अतꣳसयत् ✱।।४।। माता । च । ते । पिता । च । ते । अग्रे । वृक्षस्य । क्रीळत : ✱। विवक्षत इवेति विवक्षत : = इव । ते । मुखम् । ब्रह्मन् । मा । त्वम् । वद : । बहु ✱।।५।। ऊर्ध्वाम् । एनाम् । उत् । श्रापय । गिरौ । भारम् । हरन्निवेति हरन् = इव ✱। अथ । अस्यै । मध्यम् । एधताम् । शीते । वाते । पुनन्निवेति पुनन् = इव ✱।।६।। ऊर्ध्वम् । एनम् । उत् । श्रयतात् । गिरौ । भारम् । हरन्निवेति हरन् = इव ✱। अथ । अस्य । मध्यम् । एजतु । शीते । वाते । पुनन्निवेति पुनन् = इव ✱।।७।। यत् । अस्या : । अꣳहुभेद्या इत्यꣳहु = भेद्या : । कृधु । स्थूलम् । उपातसदित्युप = अतसत् ✱। मुष्कौ । इत् । अस्या : । एजत : । गोशफ इति गो = शफे । शकुला इवेति शकुलौ = इव ✱।।८।। यत् । देवास : । ललामगुमिति ललाम = गुम् । प्र । विष्टीमिनम् । आविषु : ✱। सक्थ्ना । देदिश्यते । नारी । सत्यस्य । अक्षिभुव इत्यक्षि = भुव : । यथा ✱।।९।। यत् । हरिण : । यवम् । अत्ति । न । पुष्टम् । पशु । मन्यते ✱। शूद्रा । यत् । अर्यजारेत्यर्य = जारा । न । पोषाय । धनायति ✱।।१०।। यत् । हरिण : । यवम् । अत्ति । न । पुष्टम् । बहु । मन्यते ✱। शूद्र : । यत् । अर्यायै । जार : । न । पोषम् । अनु । मन्यते ✱।।११।। दधिक्राव्ण इति दधि = क्राव्ण : । अकारिषम् । जिष्णो : । अश्वस्य । वाजिन : ✱।

| | |
|---|---|
| 25.34.b | सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत् ।।१२।।(६) |

| | |
|---|---|
| 25.35.a | गायत्री त्रिष्टुब् जगत्यनुष्टुप् पङ्क्त्या सह । |
| 25.35.b | बृहत्युष्णिहा ककुप्सूचीभि : शम्यन्तु त्वा ।।१।। |
| 25.36.a | द्विपदा याश्चतुष्पदा : त्रिपदा याश्च षट्पदा : । |
| 25.36.b | विच्छन्दा याश्च सच्छन्दा : सूचीभि : शम्यन्तु त्वा ।।२।। |
| 25.37.a | महानाम्न्यो रेवत्यो विश्वा आशा : प्रभूवरी : । |
| 25.37.b | मैघी र्विद्युतो वाच : सूचीभि : शम्यन्तु त्वा ।।३।। |
| 25.38.a | नार्यस्ते पत्न्यो लोम विचिन्वन्तु मनीषया । |
| 25.38.b | देवानां पत्न्यो दिश : सूचीभि : शम्यन्तु त्वा ।।४।। |
| 25.39.a | रजता हरिणी : सीसा युजो युज्यन्ते कर्मभि : । |
| 25.39.b | अश्वस्य वाजिनस्त्वचि सिमा : शम्यन्तु शम्यन्ती : ।।५।। |
| 25.40.a | कुविदङ्ग यवमन्तो यवञ् चिद्यथा दान्त्यनुपूर्वँ वियूय । |
| 25.40.b | इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्ति न्न जग्मु : ।।६।।(७) |

| | |
|---|---|
| 25.41.a | कस्त्वाऽऽच्छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शम्यति । |

सुरभि । न : । मुखा । करत् । प्र । न : । आयूंषि । तारिषत् ✱।।१२।।६।।१६८-०=१६८।।

गायत्री ।( त्रिष्टुप् । त्रिस्तुबिति त्रि = स्तुप् )। जगती । (अनुष्टुप् । अनुस्तुबित्यनु = स्तुप् )। पङ्क्त्या । सह ✱। बृहती । उष्णिहा । ककुप् । सूचीभि : । शम्यन्तु । त्वा ✱।।१।। द्विपदा इति द्वि = पदा : । या : ।( चतुष्पदा : । चतु : पदा इति चतु : = पदा : )। त्रिपदा इति त्रि = पदा : । या : । च । षट्पदा इति षट् = पदा : ✱। विच्छन्दा इति वि = छन्दा : । या : । च । सच्छन्दा इति स = छन्दा : । सूचीभि : । शम्यन्तु । त्वा ✱।।२।। महानाम्न्य इति महा = नाम्न्य : । रेवत्य : । विश्वा : । आशा : । प्रभूवरी रिति प्र = भूवरी : ✱। मैघी : । विद्युत इति वि = द्युत : । वाच : । सूचीभि : । शम्यन्तु । त्वा ✱।।३।। नार्य : । ते । पत्न्य : । लोम । वि । चिन्वन्तु । मनीषया ✱। देवानाम् । पत्न्य : । दिश : । सूचीभि : । शम्यन्तु । त्वा ✱।।४।। रजता : । हरिणी : । सीसा : । युज : । युज्यन्ते । कर्मभि रिति कर्म = भि : ✱। अश्वस्य । वाजिन : । त्वचि । सिमा : । शम्यन्तु । शम्यन्ती : ✱।।५।। कुवित् । अङ्ग । यवमन्त इति यव = मन्त : । यवम् । चित् । यथा । दान्ति । अनुपूर्व मित्यनु = पूर्वम् । वियूयेति वि = यूय ✱। इहेहे तीह = इह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिष : । नमउक्ति मिति नम : = उक्तिम् । न । जग्मु : ✱।।६।।७।। ८०-१८=६२।।

क : । त्वा । आ । छ्यति । क : । त्वा । वि । शास्ति । क : । ते । गात्राणि । शम्यति ✱।

| | |
|---|---|
| 25.41.b | क उ ते शमिता कवि : ॥१॥ |
| 25.42.a | ऋतवस्त ऋतुथा पर्व शमितारो वि शासतु । |
| 25.42.b | सँवत्सरस्य तेजसा शमीभि : शम्यन्तु त्वा ॥२॥ |
| 25.43.a | अर्धमासा : परूꣳषि ते मासा आ च्छ्यन्तु शम्यन्त : । |
| 25.43.b | अहोरात्राणि मरुतो विलिष्टꣳ सूदयन्तु ते ॥३॥ |
| 25.44.a | दैव्या अध्वर्यवस्त्वाऽऽच्छ्यन्तु वि च शासतु । |
| 25.44.b | गात्राणि पर्वशस्ते सिमा : कृण्वन्तु शम्यन्ती : ॥४॥ |
| 25.45.a | द्यौस्ते पृथिव्यन्तरिक्षँ वायुश् छिद्रं पृणातु ते । |
| 25.45.b | सूर्यस्ते नक्षत्रै : सह लोकं कृणोतु साधुया ॥५॥ |
| 25.46.a | शन्ते परेभ्यो गात्रेभ्य : शमस्त्ववरेभ्य : । |
| 25.46.b | शमस्थभ्यो मज्ज्भ्य : शम्वस्तु तन्वै तव ॥६॥(८) |

| | |
|---|---|
| 25.47.a | क : स्विदेकाकी चरति क उ स्विज्जायते पुन : । |
| 25.47.b | किꣳ स्विद् धिमस्य भेषजङ् किम्वावपनम् महत् ॥१॥ |
| 25.48.a | सूर्य एकाकी चरति चन्द्रमा जायते पुन : । |
| 25.48.b | अग्नि र्हिमस्य भेषजं भूमिरावपनं महत् ॥२॥ |
| 25.49.a | किꣳ स्वित्सूर्यसमं ज्योति : किꣳ समुद्रसमꣳ सर : । |
| 25.49.b | किꣳ स्वित्पृथिव्यै वर्षीय : कस्य मात्रा न विद्यते ॥३॥ |

क : । ऊँइत्यूँ । ते । शमिता । कवि : ✱।।१।। ऋतव : । ते । ऋतुथेत्यृतु = था । पर्व । शमितार : । वि । शासतु ✱। सँवत्सरस्य । तेजसा । शमीभि : । शम्यन्तु । त्वा ✱।।२।। अर्धमासा इत्यर्ध = मासा : । परूꣴषि । ते । मासा : । आ । छ्यन्तु । शम्यन्त : ✱। अहोरात्राणि । मरुत : । विलिष्ट मिति वि = लिष्टम् । सूदयन्तु । ते ✱।।३।। दैव्या : । अध्वर्यव : । त्वा । आ । छ्यन्तु । वि । च । शासतु ✱। गात्राणि । पर्वश इति पर्व = श : । ते । सिमा : । कृण्वन्तु । शम्यन्ती : ✱।।४।। द्यौ : । ते । पृथिवी । अन्तरिक्षम् । वायु : । छिद्रम् । पृणातु । ते ✱। सूर्य : । ते । नक्षत्रै : । सह । लोकम् । कृणोतु । साधुयेति साधु = या ✱।।५।। शम् । ते । परेभ्य : । गात्रेभ्य : । शम् । अस्तु । अवरेभ्य : ✱। शम् । अस्थभ्य इत्यस्थ = भ्य : । मज्ज्भ्य इति मज्ज = भ्य : । शम् । ऊँइत्यूँ । अस्तु । तन्वै । तव ✱।।६।।८।।८५-०=८५।।

क : । स्वित् । एकाकी । चरति । क : । ऊँइत्यूँ । स्वित् । जायते । पुन रिति पुन : ✱। किम् । स्वित् । हिमस्य । भेषजम् । किम् । ऊँइत्यूँ । आवपन मित्या = वपनम् । महत् ✱।।१।। सूर्य : । एकाकी । चरति । चन्द्रमा : । जायते । पुन रिति पुन : ✱। अग्नि : । हिमस्य । भेषजम् । भूमि : । आवपन मित्या = वपनम् । महत् ✱।।२।। किम् । स्वित् । सूर्यसम मिति सूर्य = समम् । ज्योति : । किम् । समुद्रसम मिति समुद्र = समम् । सर : ✱। किम् । स्वित् । पृथिव्यै । वर्षीय : । कस्य । मात्रा । न । विद्यते ✱।।३।।

| | |
|---|---|
| 25.50.a | ब्रह्म सूर्यसमं ज्योति र्द्यौ : समुद्रसमॅं सर : । |
| 25.50.b | इन्द्र : पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ।।४।। |
| 25.51.a | पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ । |
| 25.51.b | येषु विष्णुस्त्रिषु पदेष्वेष्ट स्तेषु विश्वं भुवनमा विवेशा (३) ।।५।। |
| 25.52.a | अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमाविवेश । |
| 25.52.b | सद्य : पर्येमि पृथिवी मुत द्यामेकेनाङ्गेन दिवो अस्य पृष्टम् ।।६।। |
| 25.53.a | केष्वन्त : पुरुष आविवेश कान्यन्त : पुरुषे अर्पितानि । |
| 25.53.b | एतद् ब्रह्मन्नुप वल्हामसि त्वा किॅं स्विन्न : प्रति वोचास्यत्र ।।७।। |
| 25.54.a | पञ्चस्वन्त : पुरुष आविवेश तान्यन्त : पुरुषे अर्पितानि । |
| 25.54.b | एतत्त्वाऽत्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मत् ।।८।।(९) |

| | |
|---|---|
| 25.55.a | कास्वि दासीत् पूर्वचित्ति : किॅं स्विदासीद् बृहद्वय : । |
| 25.55.b | का स्विदासीत् पिलिप्पिला का स्विदासीत् पिशङ्गिला ।।१।। |
| 25.56.a | द्यौरासीत् पूर्वचित्ति रश्व आसीद् बृहद्वय : । |
| 25.56.b | अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला ।।२।। |
| 25.57.a | का ईमरे पिशङ्गिला का ईङ् कुरुपिशङ्गिला । |

ब्रह्म । सूर्यसम मिति सूर्य = समम् । ज्योति : । द्यौ : । समुद्रसम मिति समुद्र = समम् । सर : ✱। इन्द्र : । पृथिव्यै । वर्षीयान् । गोः । तु । मात्रा । न । विद्यते ✱।।४।। पृच्छामि । त्वा । चितये । देवसखेति देव = सख । यदि । त्वम् । अत्र । मनसा । जगन्थ ✱। येषु । विष्णु : । त्रिषु । पदेषु । एष्ट इत्या = इष्ट : । तेषु । विश्वम् । भुवनम् । आ । विवेशा (३) ✱।।५।। अपि । तेषु । त्रिषु । पदेषु । अस्मि । येषु । विश्वम् । भुवनम् । आविवेशेत्या = विवेश ✱। सद्य : । परि । एमि । पृथिवीम् । उत । द्याम् । एकेन । अङ्गेन । दिव : । अस्य । पृष्ठम् ✱।।६।। केषु । अन्त रित्यन्त : । पुरुष : । आ । विवेश । कानि । अन्त रित्यन्त : । पुरुषे । अर्पितानि ✱। एतत् । ब्रह्मन् । उप । वल्हामसि । त्वा । किम् । स्वित् । न : । प्रति । वोचासि । अत्र ✱।।७।। पञ्चस्विति पञ्च = सु । अन्त रित्यन्त : । पुरुष : । आ । विवेश । तानि । अन्त रित्यन्त : । पुरुषे । अर्पितानि ✱। एतत् । त्वा । अत्र । प्रतिमन्वान इति प्रति = मन्वान : । अस्मि । न । मायया । भवसि । उत्तर इत्युत् = तर : । मत् ✱।।८।।९।।१३६-२९=१०७।।

का । स्वित् । आसीत् । पूर्वचित्ति रिति पूर्व = चित्ति : । किम् । स्वित् । आसीत् । बृहत् । वय : ✱। का । स्वित् । आसीत् । पिलिप्पिला । का । स्वित् । आसीत् । पिशङ्गिला ✱।।१।। द्यौ : । आसीत् । पूर्वचित्ति रिति पूर्व = चित्ति : । अश्व : । आसीत् । बृहत् । वय : ✱। अवि : । आसीत् । पिलिप्पिला । रात्रि : । आसीत् । पिशङ्गिला ✱।।२।। का । ईम् । अरे । पिशङ्गिला । का । ईम् । कुरुपिशंगि लेति कुरु = पिशंगिला ✱।

| | |
|---|---|
| 25.57.b | क ईमास्कन्दमर्षति क ईम् पन्थाँ वि सर्पति ।।३।। |
| 25.58.a | अजाऽरे पिशङ्गिला श्वावित्कुरुपिशङ्गिला । |
| 25.58.b | शश आस्कन्द मर्षत्यहि : पन्थाँ विसर्पति ।।४।। |
| 25.59.a | कत्यस्य विष्ठा : कत्यक्षराणि कति होमास : कतिधा समिद्ध : । |
| 25.59.b | यज्ञस्य त्वा विदथा पृच्छमत्र कति होतार ऋतुशो यजन्ति ।।५।। |
| 25.60.a | षळस्य विष्ठा : शत मक्षराण्यशीतिर्होमा : समिधोह तिस्र : । |
| 25.60.b | यज्ञस्य ते विदथा प्र ब्रवीमि सप्त होतार ऋतुशो यजन्ति ।।६।। |
| 25.61.a | को अस्य वेद भुवनस्य नाभिं को द्यावापृथिवी अन्तरिक्षम् । |
| 25.61.b | क : सूर्यस्य वेद बृहतो जनित्रं को वेद चन्द्रमसँ य्यतोजा : ।।७।। |
| 25.62.a | वेदाह मस्य भुवनस्य नाभिँ वेद द्यावापृथिवी अन्तरिक्षम् । |
| 25.62.b | वेद सूर्यस्य बृहतो जनित्र मथो वेद चन्द्रमसँ य्यतोजा : ।।८।। |
| 25.63.a | पृच्छामि त्वा परमन्तम् पृथिव्या : पृच्छामि यत्र भुवनस्य नाभि : । |
| 25.63.b | पृच्छामि त्वा वृष्णो अश्वस्य रेत : पृच्छामि वाच : परमँ व्योम ।।९।। |
| 25.64.a | इयँ वेदि : परो अन्त : पृथिव्या अयँ य्यज्ञो भुवनस्य नाभि : । |

क : । ईम् । आस्कन्द मित्या = स्कन्दम् । अर्षति । क : । ईम् । पन्थाम् । वि । सर्पति ✱।।३।। अजा । अरे । पिशङ्गिला । (श्वावित् । श्वविदिति श्व = वित्)। कुरुपिशङ्गिलेति कुरु = पिशङ्गिला ✱। शश : । आस्कन्द मित्या = स्कन्दम् । अर्षति । अहि : । पन्थाम् । वि । सर्पति ✱।।४।। कति । अस्य ।( विष्ठा : । विस्था इति वि = स्था : )। कति । अक्षराणि । कति । होमास : । कतिधा । समिद्ध इति सं = इद्ध : ✱। यज्ञस्य । त्वा । विदथा । पृच्छम् । अत्र । कति । होतार : । ऋतुश इत्यृतु = श : । यजन्ति ✱।।५।। षट् । अस्य ।( विष्ठा : । विस्था इति वि = स्था : )। शतम् । अक्षराणि । अशीति : । होमा : । समिध इति सं = इध : । ह । तिस्र : ✱। यज्ञस्य । ते । विदथा । प्र । ब्रवीमि । सप्त । होतार : । ऋतुश इत्यृतु = श : । यजन्ति ✱।।६।। क : । अस्य । वेद । भुवनस्य । नाभिम् । क : । द्यावापृथिवी इति द्यावापृथिवी । अन्तरिक्षम् ✱। क : । सूर्यस्य । वेद । बृहत : । जनित्रम् । क : । वेद । चन्द्रमसम् । यतोजा इति यत : = जा : ✱।।७।। वेद । अहम् । अस्य । भुवनस्य । नाभिम् । वेद । द्यावापृथिवी इति द्यावापृथिवी । अन्तरिक्षम् ✱। वेद । सूर्यस्य । बृहत : । जनित्रम् । अथो इत्यथो । वेद । चन्द्रमसम् । यतोजा इति यत : = जा : ✱।।८।। पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्या : । पृच्छामि । यत्र । भुवनस्य । नाभि : ✱। पृच्छामि । त्वा । वृष्ण : । अश्वस्य । रेत : । पृच्छामि । वाच : । परमम् । व्योमेति वि = ओम ✱।।९।। इयम् । वेदि : । पर : । अन्त : । पृथिव्या : । अयम् । यज्ञः । भुवनस्य । नाभि : ✱।

| | |
|---|---|
| 25.64.b | अयꣳ सोमो वृष्णो अश्वस्य रेतो ब्रह्माऽयँ वाच : परमँ व्योम ॥१०॥ |
| 25.65.a | सुभू : स्वयम्भू : प्रथमोऽन्तर्महत्यर्णवे । |
| 25.65.b | दधे ह गर्भमृत्वियँ य्यतो जात : प्रजापति : ॥११॥ |
| 25.66.a | होता यक्षत्प्रजापतिꣳ सोमस्य महिम्न : । |
| 25.66.b | जुषतां पिबतु सोमꣳ होत र्यज ॥१२॥ |
| 25.67.a | प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । |
| 25.67.b | यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳस्याम पतयो रयीणाम्॥१३॥(१०) |

हिरण्यगर्भो द्वे ॥२॥ य : प्राणतो द्वे ॥२॥ युञ्जन्ति नव ॥९॥ वायुष्ट्वा षट् ॥६॥ प्राणाय तिस्र : ॥३॥ उत्सकथ्या द्वादश ॥१२॥ गायत्री षट् ॥६॥ कत्स्वा षट् ॥६॥ क : स्तिदष्ट॥८॥ का स्वित् त्रयोदश ॥१३॥ दशानुवाकेषु सप्तषष्टि : ॥६७॥

## ॥ इति शुक्लयजु : काण्वसंहितायां पञ्चविंशोऽध्याय : ॥

अयम् । सोम : । वृष्ण : । अश्वस्य । रेत : । ब्रह्मा । अयम् । वाच : । परमम् । व्योमेति वि = ओम *।।१०।। सुभूरिति सु = भू : । स्वयंभूरिति स्वयं = भू : । प्रथम : । अन्त : । महति । अर्णवे *। दधे । ह । गर्भम् । ऋत्वियम् । यत : । जात : । प्रजापति रिति प्रजा = पति : *।।११।। होता । यक्षत् । प्रजापति मिति प्रजा = पतिम् । सोमस्य । महिम्न : *। जुषताम् । पिबतु । सोमम् । होत : । यज *।।१२।। प्रजापत इति प्रजा = पते । न । त्वत् । एतानि । अन्य : । विश्वा । रूपाणि । परि । ता । बभूव *। यत्कामा इति यत् = कामा : । ते । जुहुमः । तत् । न : । अस्तु । वयम् । स्याम । पतय : । रयीणाम् *।।१३।।१०।।२०८-५०=१५८।। आहत्य पद संख्या ।।१०९६-१९६= ९००।।

## इतिपञ्चविंशोऽध्याय :

# ।। इतिपञ्चविंशोऽध्याय : ।।

| Adhyaya | 25 | | |
|---|---|---|---|
| **Anuvaka No.** | **Total Padas** | **Galitha Padas** | **Suddha Padas** |
| 1 | 55 | 29 | 26 |
| 2 | 54 | 17 | 37 |
| 3 | 123 | 6 | 117 |
| 4 | 133 | 38 | 95 |
| 5 | 54 | 9 | 45 |
| 6 | 168 | 0 | 168 |
| 7 | 80 | 18 | 62 |
| 8 | 85 | 0 | 85 |
| 9 | 136 | 29 | 107 |
| 10 | 208 | 50 | 158 |
| **Total** | **1096** | **196** | **900** |

# अथ षड् विंशोऽध्याय :

| | |
|---|---|
| 26.1.a | अश्वस्तूपरो गोमृगस्ते प्राजापत्या : कृष्णग्रीव आग्नेयो रराटे । |
| 26.1.b | पुरस्ता त्सारस्वती मेष्यधस्ताद् धन्वो : ।।१।। |
| 26.2.a | आश्विना अधोरामौ बाह्वो : सौमापौष्ण : श्यामो नाभ्याॅं सौर्ययामौ । |
| 26.2.b | श्वेतश्च कृष्णश्च पार्श्वयो : ।।२।। |
| 26.3.a | त्वाष्ट्रौ लोमशसक्थौ सक्थ्योर्वायव्य : श्वेत : पुच्छ इन्द्राय स्वपस्याय वेहद्वैष्णवो वामन : । |
| 26.3.b | रोहितो धूम्ररोहित : कर्कन्धुरोहितस्ते सौम्या बभ्रुररुणबभ्रु : शुकबभ्रुस्ते वारुणा : ।।३।। |
| 26.4.a | शितिरन्ध्रोऽन्यत : शितिरन्ध्र : समन्तशितिरन्ध्रस्ते सावित्रा : शितिबाहु रन्यत : शितिबाहु : समन्तशितिबाहुस्ते बार्हस्पत्या : । |
| 26.4.b | पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्य : ।।४।। |
| 26.5.a | शुद्धवाल : सर्वशुद्धवालो मणिवालस्त आश्विना : । |
| 26.5.b | श्येत : श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णायामा : ।।५।। |
| 26.6.a | अवलिप्ता रौद्रा नभोरूपा : पार्जन्या : । |

# अथ षड्विंशोऽध्याय :

ॐ अश्व : । तूपर : । गोमृग इति गो = मृग : । ते । प्राजापत्या इति प्राजा = पत्या : । कृष्णग्रीव इति कृष्ण = ग्रीव : । आग्नेय : । रराटे । पुरस्तात् । सारस्वती । मेषी । अधस्तात् । हन्वो : ।।१।। आश्विनौ । अधोरामा इत्यध : = रामौ । बाह्वो : । सौमापौष्ण : । श्याम : । नाभ्याम् । सौर्ययामौ । श्वेत : । च । कृष्ण : । च । पार्श्वयो : ।।२।। त्वाष्टौ । लोमशसक्था इति लोमश = सक्थौ । सक्थ्यो : । वायव्य : । श्वेत : । पुच्छे । इन्द्राय । स्वपस्यायेतिसु = अपस्याय । वेहत् । वैष्णव : । वामन : ✱। रोहित : । धूम्ररोहित इति धूम्र = रोहित : । कर्कन्धुरोहित इति कर्कन्धु = रोहित : । ते । सौम्या : । बभ्रु : । अरुणबभ्रु रित्यरुण = बभ्रु : । शुकबभ्रु रिति शुक = बभ्रु : । ते । वारुणा : ।।३।। शितिरन्ध्र इति शिति = रन्ध्र : । अन्यतश्शितिरन्ध्र इत्यन्यत : = शितिरन्ध्र : । समन्तशितिरन्ध्र इति समन्त = शितिरन्ध्रः । ते । सावित्रा : । शितिबाहुरिति शिति = बाहु : । अन्यतश्शितिबाहु रित्यन्यत : = शितिबाहु : । समन्तशिति बाहु रिति समन्त = शितिबाहु : । ते । बार्हस्पत्या : । पृषती । क्षुद्रपृष तीति क्षुद्र = पृषती । स्थूलपृष तीति स्थूल = पृषती । ता : । मैत्रावरुण्य : ✱।।४।। शुद्धवाल इति शुद्ध = वाल : । सर्वशुद्धवाल इति सर्वशुद्ध = वाल : । मणिवाल इति मणि = वाल : । ते । आश्विना : । श्येत : । श्येताक्ष इतिश्येत = अक्ष : । अरुण : । ते । रुद्राय । पशु पतय इति पशु = पतये । कर्णा : । यामा : ।।५।। अवलिप्ता इत्यव = लिप्ता : । रौद्रा : । नभोरूपा इति नभ : = रूपा : । पार्जन्या : ✱।

| | |
|---|---|
| 26.6.b | पृश्निस्तिरश्चीनपृश्नि रूर्ध्वपृश्निस्ते मारुता : ।।६।। |
| 26.7.a | फल्गूर्लोहितोर्णी पलक्षी ता : सारस्वत्य : । |
| 26.7.b | प्लीहाकर्ण : शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्रा : ।।७।। |
| 26.8.a | कृष्णग्रीव : शितिकक्षोऽञ्जिसक्थस्त ऐन्द्राग्ना : । |
| 26.8.b | कृष्णाञ्जि रल्पाञ्जि र्महाञ्जिस्त उषस्या : ।।८।। |
| 26.9.a | शिल्पा वैश्वदेव्यो रोहिण्य स्त्र्यवयो वाचेऽविज्ञाता अदित्यै । |
| 26.9.b | सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्य : ।।९।।(१) |

| | |
|---|---|
| 26.10.a | कृष्णग्रीवा आग्नेया : शितिभ्रवो वसूनाᳩ रोहिता रुद्राणाम् । |
| 26.10.b | श्वेता अवरोकिण आदित्यानां नभोरूपा : पार्जन्या : ।।१।। |
| 26.11.a | उन्नत ऋषभो वामनस्त ऐन्द्रावैष्णवा उन्नत : शितिबाहु : शितिपृष्ठस्त ऐन्द्राबार्हस्पत्या : । |
| 26.11.b | शुकरूपा वाजिना : कल्माषा आग्निमारुता : श्यामा : पौष्णा : ।।२।। |
| 26.12.a | एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह आग्नावैष्णवा : । |
| 26.12.b | वशा मैत्रावरुण्योऽन्यत एन्यो मैत्र्य : ।।३।। |

पृश्नि : । तिरश्चीनपृश्निरिति तिरश्चीन = पृश्नि : । ऊर्ध्वपृश्निरित्यूर्ध्व = पृश्नि : । ते । मारुता : ॥६॥ फल्गू : । लोहितोर्णीति लोहित = उर्णी । पलक्षी । ता : । सारस्वत्य : । प्लीहाकर्ण इति प्लीहा = कर्ण : । शुण्ठाकर्ण इति शुण्ठा = कर्ण : । अध्यालोहकर्ण इत्यध्यालोह = कर्ण : । ते । त्वाष्ट्रा : ॥७॥ कृष्णग्रीव इति कृष्ण = ग्रीव : । शितिकक्ष इति शिति = कक्ष : । अञ्जिसक्थ इत्यञ्जि = सक्थ : । ते । ऐन्द्राग्ना : । कृष्णाञ्जिरिति कृष्ण = अञ्जि : । अल्पाञ्जिरित्यल्प = अञ्जि : । महाञ्जिरिति महा = अञ्जि : । ते । उषस्या : *॥८॥ शिल्पा : । वैश्वदेव्य इति वैश्व = देव्य : । रोहिण्य : । त्र्यवय इति त्रि = अवय : । वाचे । अविज्ञाता इत्यवि = ज्ञाता : । अदित्यै । सरूपा इति स = रूपा : । धात्रे । वत्सतर्य : । देवानाम् । पत्नीभ्य : *॥९॥१॥११५-०=११५॥

कृष्णग्रीवा इति कृष्ण = ग्रीवा : । आग्नेया : । शितिभ्रव इति शिति = भ्रव : । वसूनाम् । रोहिता : । रुद्राणाम् । श्वेता : । अवरोकिण इत्यव = रोकिण : । आदित्यानाम् । नभोरूपा इति नभ : = रूपा : । पार्जन्या : *॥१॥ उन्नत इत्युत् = नत : । ऋषभ : । वामन : । ते । ऐन्द्रावैष्णवा : । उन्नत इत्युत् = नत : । शितिबाहुरिति शिति = बाहु : । शितिपृष्ठ इति शिति = पृष्ठ : । ते । ऐन्द्राबार्हस्पत्या : । शुकरूपा इति शुक = रूपा : । वाजिना : । कल्माषा : । आग्निमारुता : । श्यामा : । पौष्णा : *॥२॥ एता : । ऐन्द्राग्ना : । द्विरूपा इति द्वि = रूपा : । अग्नीषोमीया : । वामना : । अनड्वाह : । आग्नावैष्णवा : । वशा : । मैत्रावरुण्य : । अन्यत एन्य इत्यन्यत : = एन्य : । मैत्र्य : *॥३॥

| | |
|---|---|
| 26.13.a | कृष्णग्रीवा आग्नेया बभ्रव : सौम्या : श्वेता वायव्या अविज्ञाता अदित्यै। |
| 26.13.b | सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्य : ॥४॥ |
| 26.14.a | कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्या : । |
| 26.14.b | शबला वैद्युता : सिध्मास्तारका : ॥५॥(२) |

| | |
|---|---|
| 26.15.a | धूम्रान्वसन्ताया लभते श्वेतान् ग्रीष्माय कृष्णान् वर्षाभ्योऽरुणाञ्छरदे । |
| 26.15.b | पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥१॥ |
| 26.16.a | त्र्यवतो गायत्र्यै पञ्चावयस् त्रिष्टुभे दित्यवाहो जगत्यै । |
| 26.16.b | त्रिवत्सा अनुष्टुभे तुर्यवाह उष्णिहे ॥२॥ |
| 26.17.a | पष्ठवाहो विराज उक्षाणो बृहत्या ऋषभा : ककुभे । |
| 26.17.b | अनड्वाह : पङ्क्त्यै धेनवोऽतिच्छन्दसे ॥३॥ |
| 26.18.a | कृष्णग्रीवा आग्नेया बभ्रव : सौम्या उपध्वस्ता : सावित्रा वत्सतर्य : सारस्वत्य : श्यामा : पौष्णा : । |
| 26.18.b | पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीया : ॥४॥ |
| 26.19.a | उक्ता : सञ्चरा एता ऐन्द्राग्ना : । |
| 26.19.b | कृष्णा वारुणा : पृश्नयो मारुता : कायास्तूपरा : ॥५॥(३) |

कृष्णग्रीवा इति कृष्ण = ग्रीवा : । आग्नेया : । बभ्रव : । सौम्या : । श्वेता : । वायव्या : । अविज्ञाता इत्यवि = ज्ञाता : । अदित्यै । सरूपा इति स = रूपाः । धात्रे । वत्सतर्य : । देवानाम् । पत्नीभ्य : *॥४॥ कृष्णा : । भौमा : । धूम्रा : । आन्तरिक्षा : । बृहन्त : । दिव्या : । शबला : । वैद्युता : । सिध्मा : । तारका : *॥५॥२॥६१-०=६१॥

धूम्रान् । वसन्ताय । आ । लभते । श्वेतान् । ग्रीष्माय । कृष्णान् । वर्षाभ्य : । अरुणान् । शरदे । पृषत : । हेमन्ताय । पिशङ्गान् । शिशिराय *॥१॥ त्र्यवय इति त्रि = अवय : । गायत्र्यै । पञ्चावय इति पञ्च = अवय : । (त्रिष्टुभे । त्रिस्तुभ इति त्रि = स्तुभे )। दित्यवाह इति दित्य = वाह : । जगत्यै । त्रिवत्सा इति त्रि = वत्सा : । (अनुष्टुभे । अनुस्तुभ इत्यनु = स्तुभे )। तुर्यवाह इति तुर्य = वाह : । उष्णिहे *॥२॥ पष्ठवाह इति पष्ठ = वाह : । विराज इति वि = राजे । उक्षाण : । बृहत्यै । ऋषभा : । ककुभे । अनड्वाह : । पङ्क्त्यै । धेनव : । अतिच्छन्दस इत्यति = छन्दसे *॥३॥ कृष्णग्रीवा इति कृष्ण = ग्रीवा : । आग्नेया : । बभ्रव : । सौम्या : । उपध्वस्ता इत्युप = ध्वस्ता : । सावित्रा : । वत्सतर्य : । सारस्वत्य : । श्यामा : । पौष्णा : । पृश्नय : । मारुता : । बहुरूपा इति बहु = रूपा : । वैश्वदेवा इति वैश्व = देवा : । वशा : । द्यावापृथिवीया : *॥४॥ उक्ता : । सञ्चरा इति सं = चरा : । एता : । ऐन्द्राग्ना : । कृष्णा : । वारुणा : । पृश्नय : । मारुता : । काया : । तूपरा : *॥५॥३॥६०-०=६०॥

| | |
|---|---|
| 26.20.a | अग्नयेऽनीकवते प्रथमजानालभते मरुद्भ्य : सान्तपनेभ्य : सवात्यान् मरुद्भ्यो गृहमेधिभ्यो बष्किहान् । |
| 26.20.b | मरुद्भ्य : क्रीळिभ्य : सꣳसृष्टान् मरुद्भ्य : स्वतवद्भ्योऽनुसृष्टान् ।।१।। |
| 26.21.a | उक्ता : सञ्चरा एता ऐन्द्राग्ना : । |
| 26.21.b | प्राशृङ्गा माहेन्द्रा बहुरूपा वैश्वकर्मणा : ।।२।। |
| 26.22.a | धूम्रा बभ्रुनीकाशा : पितॄणाꣳ सोमवतां बभ्रवो धूम्रनीकाशा : पितॄणां बर्हिषदाम् । |
| 26.22.b | कृष्णा बभ्रुनीकाशा : पितॄणामग्निष्वात्तानाङ् कृष्णा : पृषन्तस्त्रैयम्बका : ।।३।। |
| 26.23.a | उक्ता : सञ्चरा एता : शुनासीरीया : । |
| 26.23.b | श्वेता वायव्या : श्वेता : सौर्या : ।।४।। |
| 26.24.a | वसन्ताय कपिञ्जला नालभते ग्रीष्माय कलविङ्कान्वर्षाभ्य स्तित्तिरीञ्छरदे वर्तिका : । |
| 26.24.b | हेमन्ताय ककराञ्छिशिराय विककरान् ।।५।।(४) |

| | |
|---|---|
| 26.25.a | समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान् । |

अग्नये । अनीकवत इत्यनीक = वते । प्रथमजानिति प्रथम = जान् । आ । लभते । मरुद्भ्य इति मरुत् = भ्यः । सान्तपनेभ्य इति सां = तपनेभ्यः । सवात्यानिति स = वात्यान् । मरुद्भ्य इति मरुत् = भ्यः । गृहमेधिभ्य इति गृहमेधि = भ्यः । बष्किहान् । मरुद्भ्य इति मरुत् = भ्यः । क्रीळिभ्य इति क्रीळि = भ्यः । सꣳसृष्टानिति सं = सृष्टान् । मरुद्भ्य इति मरुत् = भ्यः । स्वतवद्भ्य इति स्वतवत् = भ्यः । अनुसृष्टानित्यनु = सृष्टान् *॥१॥ उक्ताः । सञ्चरा इति सं = चराः । एताः । ऐन्द्राग्नाः ।( प्राशृङ्गाः । प्रशृङ्गा इति प्र = शृङ्गाः )। माहेन्द्रा इति माहा = इन्द्राः । बहुरूपा इति बहु = रूपाः । वैश्वकर्मणा इति वैश्व = कर्मणाः *॥२॥ धूम्राः । (बभ्रुनीकाशाः । बभ्रुनिकाशा इति बभ्रु = निकाशाः )। पितॄणाम् । सोमवता मिति सोम = वताम् । बभ्रवः । (धूम्रनीकाशाः । धूम्रनिकाशा इति धूम्र = निकाशाः । पितॄणाम् । (बर्हिषदाम् । बर्हिसदा मिति बर्हि = सदाम् )। कृष्णाः ।( बभ्रुनीकाशाः । बभ्रुनिकाशा इति बभ्रु = निकाशाः )। पितॄणाम् । (अग्निष्वात्तानाम् । अग्निस्वात्ताना मित्यग्नि = स्वात्तानाम् )। कृष्णाः । पृषन्तः । त्रैयंबकाः *॥३॥ उक्ताः । सञ्चरा इति सं = चराः । एताः । शुनासीरीयाः । श्वेताः । वायव्याः । श्वेताः । सौर्याः *॥४॥ वसन्ताय । कपिञ्जलान् । आ । लभते । ग्रीष्माय । कलविङ्कान् । वर्षाभ्यः । तित्तिरीन् । शरदे । वर्तिकाः । हेमन्ताय । ककरान् । शिशिराय । विककरा निति वि = ककरान् *॥५॥४॥६२-३=५९॥

समुद्राय । शिशुमारा निति शिशु = मारान् । आ । लभते । पर्जन्याय । मण्डूकान् । अद्भ्य इत्यत् = भ्यः । मत्स्यान् ।

| | |
|---|---|
| 26.25.b | मित्राय कुलीपयान्वरुणाय नाक्रान् ॥१॥ |
| 26.26.a | सोमाय हꣳसानालभते वायवे बलाका इन्द्राग्निभ्यां क्रुञ्चान् । |
| 26.26.b | मित्राय मद्गून् वरुणाय चक्रवाकान् ॥२॥ |
| 26.27.a | अग्नये कुटरूनालभते वनस्पतिभ्य उलूकानग्नीषोमाभ्यां चाषान् । |
| 26.27.b | अश्विभ्याम् मयूरान् मित्रावरुणाभ्यां कपोतान् ॥३॥ |
| 26.28.a | सोमाय लबानालभते त्वष्ट्रे कौलीकान् गोषादी र्देवानां पत्नीभ्य : । |
| 26.28.b | कुलीका देवजामिभ्योऽग्नये गृहपतये पारुष्णान् ॥४॥ |
| 26.29.a | अह्ने पारावतानालभते रात्र्यै सीचापूरहोरात्रयो : सन्धिभ्यो जतू : । |
| 26.29.b | मासेभ्यो दात्यौहान्त्सँवत्सराय महत : सुपर्णान् ॥५॥(५) |

| | |
|---|---|
| 26.30.a | भूम्या आखूनालभतेऽन्तरिक्षाय पाङ्क्त्रान् दिवे कशान् । |
| 26.30.b | दिग्भ्यो नकुलान् बभ्रुका नवान्तरदिशाभ्य : ॥१॥ |
| 26.31.a | वसुभ्य ऋश्यानालभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून् । |
| 26.31.b | विश्वेभ्यो देवेभ्य : पृषतान्त्साध्येभ्य : कुलुङ्गान् ॥२॥ |
| 26.32.a | ईशानाय परस्वत आलभते मित्राय गौरान्वरुणाय महिषान् । |
| 26.32.b | बृहस्पतये गवयाꣳस्त्वष्ट्र उष्ट्रान् ॥३॥ |
| 26.33.a | प्रजापतये पुरुषान् हस्तिन आलभते वाचे प्लुषीन् । |
| 26.33.b | चक्षुषे मशकाञ्छ्रोत्राय भृङ्गा : ॥४॥ |

मित्राय । कुलीपयान् । वरुणाय । नाक्रान् ✱।।१।। सोमाय । हꣳसान् । आ । लभते । वायवे । बलाका : । इन्द्राग्निभ्या मितीन्द्राग्नि = भ्याम् । क्रुञ्चान् । मित्राय । मद्गून् । वरुणाय । चक्रवाका निति चक्र = वाकान् ✱।।२।। अग्नये । कुटरून् । आ । लभते । वनस्पतिभ्य इति वनस्पति = भ्य : । उलूकान् । अग्नीषोमाभ्याम् । चाषान् । अश्विभ्या मित्यश्वि = भ्याम् । मयूरान् । मित्रावरुणाभ्याम् । कपोतान् ✱।।३।। सोमाय । लबान् । आ । लभते । त्वष्ट्रे । कौलीकान् । (गोषादी : । गोसादी रिति गो = सादी : )। देवानाम् । पत्नीभ्य : । कुलीका : । देवजामिभ्य इति देवजामि = भ्य : । अग्नये । गृहपतय इति गृह = पतये । पारुष्णान् ✱।।४।। अन्हे । पारावतान् । आ । लभते । रात्र्यै । सीचापू : । अहोरात्रयो : । सन्धिभ्य इति सन्धि = भ्य : । जतू : । मासेभ्य : । दात्यौहान् । सँवत्सराय । महत : । सुपर्णा निति सु = पर्णान् ✱।।५।।५।।६४-०=६४।।

भूम्यै । आखून् । आ । लभते । अन्तरिक्षाय । पाङ्क्त्रान् । दिवे । कशान् । दिग्भ्य इति दिक् = भ्य : । नकुलान् । बभ्रुकान् । अवान्तरदिशाभ्य इत्यवान्तर = दिशाभ्य : ✱।।१।। वसुभ्य इति वसु = भ्य : । ऋश्यान् । आ । लभते । रुद्रेभ्य : । रुरून् । आदित्येभ्य : । न्यङ्कून् । विश्वेभ्य : । देवेभ्य : । पृषतान् । साध्येभ्य : । कुलुङ्गान् ✱।।२।। ईशानाय । परस्वत : । आ । लभते । मित्राय । गौरान् । वरुणाय । महिषान् । बृहस्पतये । गवयान् । त्वष्ट्रे । उष्ट्रान् ✱।।३।। प्रजापतय इति प्रजा = पतये । पुरुषान् । हस्तिन : । आ । लभते । वाचे । प्लुषीन् । चक्षुषे । मशकान् । श्रोत्राय । भृङ्गा : ✱।।४।।

| | |
|---|---|
| 26.34.a | प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कट : । |
| 26.34.b | शार्दूलाय रोहिदृषभाय गवयी क्षिप्रश्येनाय वर्तिका नीलङ्गो : कृमि : समुद्राय शिशुमारो हिमवते हस्ती ।।५।।(६) |

| | |
|---|---|
| 26.35.a | मयु : प्राजापत्य उलो हलिक्ष्णो वृषदꣳशस्ते धात्रे दिशां कङ्को धुङ्क्षाऽऽग्नेयी । |
| 26.35.b | कलविङ्को लोहिताहि : पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्च : ।।१।। |
| 26.36.a | सोमाय कुलुङ्ग आरण्योऽजो नकुल : शका ते पौष्णा : क्रोष्टा मायोरिन्द्रस्य गौरमृग : । |
| 26.36.b | पिद्वो न्यङ्कु : कक्कटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाक : ।।२।। |
| 26.37.a | सौरी बलाका शार्ग : सृजय : शयाण्डकस्ते मैत्रा : सरस्वत्यै शारि : पुरुषवाक् श्वाविद्भौमी । |
| 26.37.b | शार्दूलो वृक : पृदाकुस्ते मन्यवे सरस्वते शुक : पुरुषवाक् ।।३।। |
| 26.38.a | सुपर्ण : पार्जन्य आतिर्वाहसो दर्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलज आन्तरिक्ष : । |
| 26.38.b | प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीय : कूर्म : ।।४।। |

प्रजापतय इति प्रजा = पतये । च । वायवे । च । गोमृग इति गो = मृग : । वरुणाय । आरण्य : । मेष : । यमाय । कृष्ण : । मनुष्यराजायेति मनुष्य = राजाय । मर्कट : । शार्दूलाय । रोहित् । ऋषभाय । गवयी । क्षिप्रश्येनायेति क्षिप्र = श्येनाय । वर्तिका । नीलङ्गो : । कृमि : । समुद्राय । शिशुमार इति शिशु = मार : । हिमवत इति हिम = वते । हस्ती *।।५।।६।।७२-०=७२।।

मयु : । प्राजापत्य इति प्राजा = पत्य : । उल : । हलिक्ष्ण : । वृषदंश इति वृष = दंश : । ते । धात्रे । दिशाम् । कङ्क : । धुङ्क्षा । आग्नेयी । कलविङ्क : । लोहिताहिरिति लोहित = अहि : । पुष्करसाद इति पुष्कर = साद : । ते । त्वाष्ट्रा : । वाचे । क्रुञ्च : *।।१।। सोमाय । कुलुङ्ग : । आरण्य : । अज : । नकुल : । शका । ते । पौष्णा : । क्रोष्टा । मायो : । इन्द्रस्य । गौरमृग इति गौर = मृग : । पिद्व : । न्यङ्कु : । कक्कट : । ते । अनुमत्या इत्यनु = मत्यै । प्रतिश्रुत्काया इति प्रति = श्रुत्कायै । चक्रवाक इति चक्र = वाक : *।।२।। सौरी । बलाका । शार्ग : । सृजय : । शयाण्डक इति शय = आण्डक : । ते । मैत्रा : । सरस्वत्यै । शारि : । पुरुषवागिति पुरुष = वाक् । (श्वावित् । श्वविदिति श्व = वित् )। भौमी । शार्दूल : । वृक : । पृदाकु : । ते । मन्यवे । सरस्वते । शुक : । पुरुषवागिति पुरुष = वाक् *।।३।। सुपर्ण इति सु = पर्ण : । पार्जन्य : । आति : । वाहस : । दर्विदिति दर्वि = दा । ते । वायवे । बृहस्पतये । वाच : । पतये । पैङ्गराज इति पैङ्ग = राज : । अलज : । आन्तरिक्ष : । प्लव : । मद्गु : । मत्स्य : । ते । नदीपतय इति नदी = पतये । द्यावापृथिवीय : । कूर्म : *।।४।।

| | |
|---|---|
| 26.39.a | पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनां कृकवाकु : सावित्रो हꣳसो वातस्य । |
| 26.39.b | नाक्रो मकर : कुलीपयस्तेऽकूपारस्य ह्रियै शल्यक : ।।५।।(७) |

| | |
|---|---|
| 26.40.a | एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणाँ ल्लोपाश आश्विन : कृष्णो रात्र्यै । |
| 26.40.b | ऋक्षो जतू : सुषिलीका त इतरजनानां जहका वैष्णवी ।।१।। |
| 26.41.a | अन्यवापोऽर्धमासानामृश्यो मयुर : सुपर्णस्ते गन्धर्वाणामपा मुद्रो मासां कश्यप : । |
| 26.41.b | रोहित्कुण्डृणाची गोलत्तिका तेऽप्सरसाम् मृत्यवेऽसित : ।।२।। |
| 26.42.a | वर्षाहू ऋतूना माखु : कशो मान्थालस्ते पितॄणां बलायाजगरो वसूनां कपिञ्जल : । |
| 26.42.b | कपोत उलूक : शशस्ते निर्ऋत्यै वरुणायारण्यो मेष : ।।३।। |
| 26.43.a | श्वित्र आदित्यानामुष्ट्रो घृणीवान् वार्ध्रीनसस्ते मत्या अरण्याय सृमरो रुरू रौद्र : । |
| 26.43.b | क्वयि : कुटरुर्दात्यौहस्ते वाजिनां कामाय पिक : ।।४।। |

पुरुषमृग इति पुरुष = मृग : । चन्द्रमस : । गोधा । कालका । (दार्वाघाट : । दार्वाघात इति दारु = आघात : )। ते । वनस्पतीनाम् । कृकवाकु : । सावित्र : । हꣳस : । वातस्य । नाक्र : । मकर : । कुलीपय : । ते । अकूपारस्य । ह्रियै । शल्यक : ✱।।५।।७।।९५-०= ९५।।

एणी । अन्ह : । मण्डूक : । मूषिका । तित्तिरि : । ते । सर्पाणाम् । लोपाश : । आश्विन : । कृष्ण : । रात्र्यै । ऋक्ष : । जतू : । सुषिलीकेति सु = षिलीका । ते । इतरजनाना मिती तर = जनानाम् । जहका । वैष्णवी ✱।।१।। अन्यवाप इत्यन्य = वाप : । अर्धमासाना मित्यर्ध = मासानाम् । ऋश्य : । मयूर : । सुपर्ण इति सु = पर्ण : । ते । गन्धर्वाणाम् । अपाम् । उद्र : । मासाम् । कश्यप : । रोहित् । कुण्डृणाची । गोलत्तिका । ते । अप्सरसाम् । मृत्यवे । असित : ✱।।२।। वर्षाहू रिति वर्ष = आहू : । ऋतूनाम् । आखु : । कश : । मान्थाल : । ते । पितॄणाम् । बलाय । अजगर : । वसूनाम् । कपिञ्जल : । कपोत : । उलूक : । शश : । ते । निर्ऋत्या इति नि : = ऋत्यै । वरुणाय । आरण्य : । मेष : ✱।।३।। श्वित्र : । आदित्यानाम् । उष्ट्र : । (घृणीवान् । घृणिवा निति घृणि = वान् )। वार्ध्रीनस : । ते । मत्यै । अरण्याय । सृमर : । रुरु : । रौद्र : । क्वयि : । कुटरु : । दात्यौह : । ते । वाजिनाम् । कामाय । पिक : ✱।।४।।

| | |
|---|---|
| 26.44.a | खड्गो वैश्वदेव : श्वा कृष्ण : कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकर : । |
| 26.44.b | सिंहो मारुत : कृकलास : पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानाम् पृषत : ।।५।।(८) |

अश्वस्तूपरो नव ।।९।। कृष्णग्रीवा पञ्च ।।५।। धूम्रान्वसन्ताय पञ्च ।।५।। अग्नयेऽनीकवते पञ्च ।।५।। समुद्राय शिशुमारान् पञ्च ।।५।। भूम्या आखून् पञ्च ।।५।। मयु : प्राजापत्य पञ्च ।।५।। एण्यह्न इति पञ्च ।।५।। अष्टानुकाकेषु चतुश्चत्वारिंशत् ।।४४।।

## ।। इति शुक्लयजु : काण्वसंहितायां षड् विंशोऽध्याय : ।।

खड्ग : । वैश्वदेव इति वैश्व = देव : । श्वा । कृष्ण : । कर्ण : । गर्दभ : । तरक्षु : । ते । रक्षसाम् । इन्द्राय । सूकर : । सिꣳह : । मारुत : । कृकलास : । पिप्पका । शकुनि : । ते । शरव्यायै । विश्वेषाम् । देवानाम् । पृषत : *।।५।।८।।९४-०=९४।। आहत्य पद संख्या ।।६२३-३=६२०।।

## इतिषड्विंशोऽध्याय :

# || इतिषड्विंशोऽध्याय : ||

| Adhyaya | 26 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 115 | 0 | 115 |
| 2 | 61 | 0 | 61 |
| 3 | 60 | 0 | 60 |
| 4 | 62 | 3 | 59 |
| 5 | 64 | 0 | 64 |
| 6 | 72 | 0 | 72 |
| 7 | 95 | 0 | 95 |
| 8 | 94 | 0 | 94 |
| Total | 623 | 3 | 620 |

# अथ सप्तविंशोऽध्याय :

| | |
|---|---|
| 27.1.a | शादन् दद्भिरवकां दन्तमूलैर्मृदं बस्वैस्तेगान्दꣳष्ट्राभ्याꣳ सरस्वत्या अग्रजिह्वं जिह्वाया उत्सादम् । |
| 27.1.b | अवक्रन्देन तालु वाजꣳ हनुभ्यामप आस्येन वृषण माण्डाभ्याम् ।।१।। |
| 27.2.a | आदित्यान् श्मश्रुभि : पन्थानं भ्रूभ्यां द्यावापृथिवी वर्तोभ्याँ विद्युतङ् कनीनकाभ्याम् । |
| 27.2.b | शुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्या इक्षवोऽवार्याणि पक्ष्माणि पार्या इक्षव : ।।२।।(१) |

| | |
|---|---|
| 27.3.a | वातम् प्राणेनापानेन नासिके उपयाममधरेणौष्ठेन सदुत्तरेण । |
| 27.3.b | प्रकाशेनान्तरमनूकाशेन बाह्य न्निवेष्पं मूर्ध्ना स्तनयित्नुं निर्बाधेनाशनिम् मस्तिष्केण विद्युतङ् कनीनकाभ्याम् ।।१।। |
| 27.4.a | कर्णाभ्याꣳ श्रोत्रꣳ श्रोत्राभ्यां कर्णौ तेदनीमधरकण्ठेनाप : शुष्ककण्ठेन चित्तं मन्याभि : । |
| 27.4.b | अदितिꣳ शीर्ष्णा निर्ऋति न्निर्जर्जल्येन शीर्ष्णा सङ्क्रोशै : प्राणान् रेष्माणꣳ स्तुपेन ।।२।।(२) |

# अथ सप्तविंशोऽध्याय :

ॐ शादम् । दद्भिरिति दत् = भि : । अवकाम् । दन्तमूलै रिति दन्त = मूलै : । मृदम् । बस्वैं : । तेगाम् । दंष्ट्राभ्याम् । सरस्वत्यै । अग्रजिह्व मित्यग्र = जिह्वम् । जिह्वाया : । उत्सादमित्युत् = सादम् । अवक्रन्देनेत्यव = क्रन्देन । तालु । वाजम् । हनुभ्या मिति हनु = भ्याम् । अप : । आस्येन । वृषणम् । आण्डाभ्याम् ।।१।। आदित्यान् । श्मश्रुभि रिति श्मश्रु = भि : । पन्थानम् । भ्रूभ्याम् । द्यावापृथिवी इति द्यावापृथिवी । वर्तोभ्या मिति वर्त : = भ्याम् । विद्युत मिति वि = द्युतम् । कनीनकाभ्याम् । शुक्लाय । स्वाहा । कृष्णाय । स्वाहा । पार्याणि । पक्ष्माणि । अवार्या : । इक्षव : । अवार्याणि । पक्ष्माणि । पार्या : । इक्षव : *।।२।।१।।४०-०=४०।।

वातम् । प्राणेन । अपानेनेत्यप - आनेन । नासिके इति नासिके । उपयाममित्युप = यामम् । अधरेण । ओष्ठेन । सत् । उत्तरेणेत्युत् = तरेण । प्रकाशेनेति प्र = काशेन । अन्तरम् । (अनूकाशेन । अनुकाशेनेत्यनु = काशेन )। बाह्यम् । निवेष्पमिति नि = वेष्पम् । मूर्ध्ना । स्तनयित्नुम् । निर्बाधेनेति नि : = बाधेन । अशनिम् । मस्तिष्केण । विद्युत मिति वि = द्युतम् । कनीनकाभ्याम् ।।१।। कर्णाभ्याम् । श्रोत्रम् । श्रोत्राभ्याम् । कर्णौ । तेदनीम् । अधरकण्ठेनेत्यधर = कण्ठेन । अप : । शुष्ककण्ठेनेति शुष्क = कण्ठेन । चित्तम् । मन्याभि : । अदितिम् । शीर्ष्णा । निर्ऋति मिति नि : = ऋतिम् । निर्जर्जल्ये नेति नि : = जर्जल्येन । शीर्ष्णा । सङ्क्रोशै रिति सं = क्रोशै : । प्राणान् । रेष्माणम् । स्तुपेन *।।२।।२।।४०-०=४०।।

| | |
|---|---|
| 27.5.a | मशकान्केशैरिन्द्र९ स्वपसा वहेन बृहस्पतिं९ शकुनिसादेन कूर्मान् । |
| 27.5.b | शफैराक्रमण९ स्थूराभ्यामृक्षलाभि : कपिञ्जलान् ।।१।। |
| 27.6.a | जवं जङ्घाभ्यामध्वानं बाहुभ्यां जाम्बीलेनारण्य मग्निमतिरुग्भ्याम् । |
| 27.6.b | पूषणन् दोर्भ्यामश्विना अ९साभ्या९ रुद्र९ रोराभ्याम् ।।२।।(३) |

| | |
|---|---|
| 27.7.a | अग्ने : पक्षतिर्वायोर्निपक्षति रिन्द्रस्य तृतीयाऽपां चतुर्थी । |
| 27.7.b | अदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुता९ सप्तमी बृहस्पतेरष्टमी । |
| 27.7.c | अर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी ।।१।।(४) |

| | |
|---|---|
| 27.8.a | इन्द्राग्न्यो : पक्षति : सरस्वत्यै निपक्षतिर्मित्रस्य तृतीयासोमस्य चतुर्थी । |
| 27.8.b | निर्ऋत्यै पञ्चम्यग्नीषोमयो : षष्ठी सर्पाणा९ सप्तमी विष्णोरष्टमी । |
| 27.8.c | पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी । |
| 27.8.d | द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरम् ।।१।।(५) |

| | |
|---|---|
| 27.9.a | मरुता९ स्कन्धा विश्वेषां देवानाम् प्रथमा कीकसा रुद्राणान् द्वितीयाऽऽदित्यानान् तृतीया वायो : पुच्छमग्नीषोमयो र्भासदौ । |

मशकान् । केशै : । इन्द्रम् । स्वपसेति सु = अपसा । वहेन । बृहस्पतिम् । शकुनिसादेनेति शकुनि = सादेन । कूर्मान् । शफै : । आक्रमण मित्या = क्रमणम् । स्थूराभ्याम् । ऋक्षलाभि : । कपिञ्जलान् ॥१॥ जवम् । जङ्घाभ्याम् । अध्वानम् । बाहुभ्या मिति बाहु = भ्याम् । जांबीलेन । अरण्यम् । अग्निम् । अतिरुग्भ्या मित्यति रुक् = भ्याम् । पूषणम् । दोर्भ्यामिति दो : = भ्याम् । अश्विनौ । अꣳसाभ्याम् । रुद्रम् । रोराभ्याम् *॥२॥३॥२७-०=२७॥

अग्ने : । पक्षति : । वायो : । निपक्षति रिति नि = पक्षति : । इन्द्रस्य । तृतीया । अपाम् । चतुर्थी । अदित्यै । पञ्चमी । इन्द्राण्यै । षष्ठी । मरुताम् । सप्तमी । बृहस्पते : । अष्टमी । अर्यम्ण : । नवमी । धातु : । दशमी । इन्द्रस्य । एकादशी । वरुणस्य । द्वादशी । यमस्य । त्रयोदशीति त्रय : = दशी *॥१॥४॥२६-०=२६॥

इन्द्राग्न्यो : । पक्षति : । सरस्वत्यै । निपक्षति रिति नि = पक्षति : । मित्रस्य । तृतीया । सोमस्य । चतुर्थी । निर्ऋत्या इति नि : = ऋत्यै । पञ्चमी । अग्नीषोमयो : । षष्ठी । सर्पाणाम् । सप्तमी । विष्णो : । अष्टमी । पूष्ण : । नवमी । त्वष्टु : । दशमी । इन्द्रस्य । एकादशी । वरुणस्य । द्वादशी । यम्यै । त्रयोदशीति त्रय : = दशी । द्यावापृथिव्यो : । दक्षिणम् । पार्श्वम् । विश्वेषाम् । देवानाम् । उत्तरम् *॥१॥५॥३२-०=३२॥

मरुताम् । स्कन्धा : । विश्वेषाम् । देवानाम् । प्रथमा । कीकसा । रुद्राणाम् । द्वितीया । आदित्यानाम् । तृतीया । वायो :। पुच्छम् । अग्नीषोमयो : । भासदौ ।

| | |
|---|---|
| 27.9.b | क्रुञ्चौ श्रोणिभ्या मिन्द्राबृहस्पती ऊरुभ्याम् मित्रावरुणा अल्गाभ्या माक्रमणᳪ स्थूराभ्यां बलं कुष्ठाभ्याम् ॥१॥(६) |

| | |
|---|---|
| 27.10.a | पूषणँ वनिष्ठुनाऽन्धाहीन्त्स्थूलगुदया सर्पान्गुदाभिर्विह्रुत आन्त्रैरपो वस्तिना वृषण माण्डाभ्याम् । |
| 27.10.b | वाजिनᳪ शेपेन प्रजाᳪ रेतसा चाषान् पित्तेन प्रदरान् पायुना कूष्माञ्छकपिण्डै : ॥१॥(७) |

| | |
|---|---|
| 27.11.a | इन्द्रस्य क्रोळोऽदित्यै पाजस्यन् दिशां जत्रवोऽदित्यै भसत् । |
| 27.11.b | जीमूतान्हृदयौपशेनान्तरिक्षं पुरीतता ॥१॥ |
| 27.12.a | नभ उदर्येण चक्रवाकौ मतस्नाभ्यां दिवँ वृक्काभ्याङ् गिरीन्प्लाशिभि : । |
| 27.12.b | उपलान्प्लीह्वा वल्मीकान्क्लोमभिर्ग्लौभि र्गुल्मान्हिराभि : स्रवन्ती : । |
| 27.12.c | ह्रदान् कुक्षिभ्याᳪ समुद्र मुदरेण वैश्वानरं भस्मना ॥२॥(८) |

| | |
|---|---|
| 27.13.a | विधृति न्नाभ्या घृतᳪ रसेनापो यूष्णा मरीचीर्विप्रुड्भिर्नीहार मूष्मणा शीनँ वसया प्रुष्वा अश्रुभि : । |

क्रुञ्चौ । श्रोणिभ्या मिति श्रोणि = भ्याम् । इन्द्राबृहस्पती इतीन्द्रा बृहस्पती । ऊरुभ्या मित्यूरु = भ्याम् । मित्रावरुणौ । अल्गाभ्याम् । आक्रमण मित्या = क्रमणम् । स्थूराभ्याम् । बलम् । कुष्ठाभ्याम् *॥१॥६॥२४-०=२४॥

पूषणम् । वनिष्ठुना । अन्धाहीनित्यन्ध = अहीन् । स्थूलगुदयेति स्थूल = गुदया । सर्पान् । गुदाभि : । विह्रुत इति वि = ह्रुत : । आन्त्रै : । अप : । वस्तिना । वृषणम् । आण्डाभ्याम् । वाजिनम् । शेपेन । प्रजामिति प्र = जाम् । रेतसा । चाषान् । पित्तेन । प्रदरानिति प्र = दरान् । पायुना । कूष्मान् । शकपिण्डै रिति शक = पिण्डै : *॥१॥७॥२२-०=२२॥

इन्द्रस्य । क्रोळ : । अदित्यै । पाजस्यम् । दिशाम् । जत्रव : । अदित्यै । भसत् । जीमूतान् । हृदयौपशेन । अन्तरिक्षम् । ( पुरीतता । पुरिततेति पुरि = तता )॥१॥ नभ : । उदर्येण । चक्रवाका इति चक्र = वाकौ । मतस्नाभ्याम् । दिवम् । वृक्काभ्याम् । गिरीन् । प्लाशिभि रिति प्लाशि = भि : । उपलान् । प्लीन्हा । वल्मीकान् । क्लोमभि रिति क्लोम = भि : । ग्लौभि : । गुल्मान् । हिराभि : । स्रवन्ती : । ह्रदान् । कुक्षिभ्या मिति कुक्षि = भ्याम् । समुद्रम् । उदरेण । वैश्वानरम् । भस्मना *॥१॥८॥३४-०=३४॥

विधृति मिति वि = धृतिम् । नाभ्या । घृतम् । रसेन । अप : । यूष्णा । मरीची : । विप्रुड्भि रिति विप्रुट् = भि : । नीहारम् । ऊष्मणा । शीनम् । वसया । प्रुष्वा : । अश्रुभि रित्यश्रु = भि : ।

| | |
|---|---|
| 27.13.b | ह्लादुनीर्दूषीकाभि रस्ना रक्षाꣳसि चित्राण्यङ्गै र्नक्षत्राणि रूपेण पृथिवी न्त्वचा जुम्बकाय स्वाहा ।।१।।(९) |

| | |
|---|---|
| 27.14.a | हिरण्यगर्भ : समवर्तताग्रे भूतस्य जात : पतिरेक आसीत् । |
| 27.14.b | स दाधार पृथिवी न्द्यामुतेमां कस्मै देवाय हविषा विधेम ।।१।। |
| 27.15.a | य : प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । |
| 27.15.b | य ईशे अस्य द्विपद श्चतुष्पद : कस्मै देवाय हविषा विधेम ।।२।। |
| 27.16.a | यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाहु : । |
| 27.16.b | यस्येमा : प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ।।३।। |
| 27.17.a | य आत्मदा बलदा यस्य विश्व उपासते प्रशिषँ य्यस्य देवा : । |
| 27.17.b | यस्य छायाऽमृतँ य्यस्य मृत्यु : कस्मै देवाय हविषा विधेम ।।४।।(१०) |

| | |
|---|---|
| 27.18.a | आनो भद्रा : क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिद : । |
| 27.18.b | देवा नो यथा सदमिद् वृधे असन् नप्रायुवो रक्षितारो दिवेदिवे ।।१।। |

ह्लादुनी : । दूषीकाभि : । अस्ना । रक्षाꣳसि । चित्राणि । अङ्गैः : । नक्षत्राणि । रूपेण । पृथिवीम् । त्वचा । जुम्बकाय । स्वाहा *।।१।।९।।२६-०=२६।।

हिरण्यगर्भ इति हिरण्य = गर्भ : । सम् । अवर्तत । अग्रे । भूतस्य । जात : । पति : । एक : । आसीत् *। स : । दाधार । पृथिवीम् । द्याम् । उत । इमाम् । कस्मै । देवाय । हविषा । विधेम *।।१।। य : । प्राणत : । निमिषत इति नि = मिषत : । महित्वेति महि = त्वा । एक : । इत् । राजा । जगत : । बभूव *। य : । ईशे । अस्य । द्विपद इति द्वि = पद : । (चतुष्पद : । चतु : पद इति चतु : = पद : )। कस्मै । देवाय । हविषा । विधेम *।।२।। यस्य । इमे । हिमवन्त इति हिम = वन्त : । महित्वेति महि = त्वा । यस्य । समुद्रम् । रसया । सह । आहु : *। यस्य । इमा : । प्रदिश इति प्र = दिश : । यस्य । बाहू इति बाहू । कस्मै । देवाय । हविषा । विधेम *।।३।। य : । आत्मदा इत्यात्म = दा : । बलदा इति बल = दा : । यस्य । विश्वे । उपासत इत्युप = आसते । प्रशिष मिति प्र = शिषम् । यस्य । देवा : *। यस्य । छाया । अमृतम् । यस्य । मृत्यु : । कस्मै । देवाय । हविषा । विधेम *।।४।।१०।।७३-३७=३६।।

आ । न : । भद्रा : । क्रतव : । यन्तु । विश्वत : । अदब्धास : । अपरीतास इत्यपरि = इतास : । उद्भिद इत्युत् = भिद : *। देवा : । न : । यथा । सदम् । इत् । वृधे । असन् । अप्रायुव इत्यप्र = आयुव : । रक्षितार : । दिवेदिव इति दिवे = दिवे *।।१।।

| | |
|---|---|
| 27.19.a | देवानाम् भद्रा सुमति ऋजूयतां देवाना१ँ रातिरभि नो निवर्तताम् । |
| 27.19.b | देवाना१ँ सख्यमुपसेदिमा वयं देवा न आयु : प्रतिरन्तु जीवसे ॥२॥ |
| 27.20.a | नान्पूर्वया निविदा हूमहे वयं भगम् मित्रमदिति न्दक्षमस्रिधम् । |
| 27.20.b | अर्यमणँ वरुण१ँ सोममश्विना सरस्वती न : सुभगा मयस्करत् ॥३॥ |
| 27.21.a | तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौ : । |
| 27.21.b | तद् ग्रावाण : सोमसुतो मयोभुव स्तदश्विना शृणुतं धिष्ण्या युवम्॥४॥ |
| 27.22.a | तमीशानं जगतस्तस्थुषस्पतिन् धियं जिन्व मवसे हूमहे वयम् । |
| 27.22.b | पूषा नो यथा वेदसा मसद् वृधे रक्षिता पायुरदब्ध : स्वस्तये ॥५॥ |
| 27.23.a | स्वस्ति न इन्द्रो वृद्धश्रवा : स्वस्ति न : पूषा विश्ववेदा : । |
| 27.23.b | स्वस्ति नस्तार्क्ष्यो अरिष्टनेमि : स्वस्ति नो बृहस्पतिर्दधातु ॥६॥ |
| 27.24.a | पृषदश्वा मरुत : पृश्निमातर : शुभँय्यावानो विदथेषु जग्मय : । |
| 27.24.b | अग्निजिह्वा मनव : सूरचक्षसो विश्वे नो देवा अवसाऽऽगमन् निह॥७॥ |
| 27.25.a | भद्रं कर्णेभि : शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्रा : । |

देवानाम् । भद्रा । सुमतिरिति सु = मति : ।( ऋजूयताम् । ऋजुयता मित्यृजु = यताम् )। देवानाम् । राति : । अभि । न : । नि । वर्तताम् ✱। देवानाम् । सख्यम् । उप । सेदिम । वयम् । देवा : । न : । आयु : । प्र । तिरन्तु । जीवसे ✱।।२।। तान् । पूर्वया । निविदेति नि = विदा । हूमहे । वयम् । भगम् । मित्रम् । अदितिम् । दक्षम् । अस्रिधम् ✱। अर्यमणम् । वरुणम् । सोमम् । अश्विना । सरस्वती । न : । सुभगेति सु = भगा । मय : । करत् ✱।।३।। तत् । न : । वात : । मयोभ्विति मय : = भु । वातु । भेषजम् । तत् । माता । पृथिवी । तत् । पिता । द्यौ : ✱। तत् । ग्रावाण : । सोमसुत इति सोम = सुत : । मयोभुव इति मय : = भुव : । तत् । अश्विना । शृणुतम् । धिष्ण्या । युवम् ✱।।४।। तम् । ईशानम् । जगत : । तस्थुष : । पतिम् । धियञ्जिन्वमिति धियं = जिन्वम् । अवसे । हूमहे । वयम् ✱। पूषा । न : । यथा । वेदसाम् । असत् । वृधे । रक्षिता । पायु : । अदब्ध : । स्वस्तये ✱।।५।। स्वस्ति । न : । इन्द्र : । वृद्धश्रवा इति वृद्ध = श्रवा : । स्वस्ति । न : । पूषा । विश्ववेदा इति विश्व = वेदा : ✱। स्वस्ति । न : । तार्क्ष्य : । अरिष्टनेमि रित्यरिष्ट = नेमि : । स्वस्ति । न : । बृहस्पति : । दधातु ✱।।६।। पृषदश्वा इति पृषत् = अश्वा : । मरुत : । पृश्निमातर इति पृश्नि = मातर : । शुभँय्यावान इति शुभं = यावान : । विदथेषु । जग्मय : ✱। अग्निजिह्वा इत्यग्नि = जिह्वा : । मनव : । सूरचक्षस इति सूर = चक्षस : । विश्वे । न : । देवा : । अवसा । आ । गमन् । इह ✱।।७।। भद्रम् । कर्णेभि : । शृणुयाम । देवा : । भद्रम् । पश्येम । अक्षभि रित्यक्ष = भि : । यजत्रा : ✱।

| | |
|---|---|
| 27.25.b | स्थिरैरङ्गैः स्तुष्टुवाꣳसस्तनूभि र्व्यशेम देवाहितँ य्यदायु : ।।८।। |
| 27.26.a | शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसन् तनूनाम् । |
| 27.26.b | पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायु र्गन्तो : ।।९।। |
| 27.27.a | अदिति र्द्यौ रदिति रन्तरिक्ष मदिति र्माता स पिता स पुत्र : । |
| 27.27.b | विश्वे देवा अदिति : पञ्च जना अदिति र्जात मदिति र्जनित्वम् ।।१०।।(११) |

| | |
|---|---|
| 27.28.a | मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुत : परिख्यन् । |
| 27.28.b | यद् वाजिनो देवजातस्य सप्ते : प्रवक्ष्यामो विदथे वीर्याणि ।।१।। |
| 27.29.a | यन् निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति । |
| 27.29.b | सुप्राङ्जो मेभ्यद् विश्वरूप इन्द्रापूष्णो : प्रियमप्येति पाथ : ।।२।। |
| 27.30.a | एष च्छाग : पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्य : । |
| 27.30.b | अभिप्रियँ य्यत्पुरोळाश मर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति ।।३।। |
| 27.31.a | यद्धविष्य मृतुशो देवयानं त्रिर्मानुषा : पर्यश्वं नयन्ति । |
| 27.31.b | अत्रा पूष्ण : प्रथमो भाग एति यज्ञं देवेभ्य : प्रतिवेदयन् नज : ।।४।। |

स्थिरै : । अङ्गैः : । (तुष्टुवाꣳस : । तुस्तुवाꣳस इति तुस्तु = वाꣳस : )। तनूभि : । वि । अशेम । देवहित मिति देव = हितम् । यत् । आयु : ✱।।८।। शतम् । इत् । नु । शरद : । अन्ति । देवा : । यत्र । न : । चक्र । जरसम् । तनूनाम् ✱। पुत्रास : । यत्र । पितर : । भवन्ति । मा । न : । मध्या ।( रीरिषत । रिरिष तेति रिरिषत )। आयु : । गन्तो : ✱।।९।। अदिति : । द्यौ : । अदिति : । अन्तरिक्षम् । अदिति : । माता । स : । पिता । स : । पुत्र : ✱। विश्वे । देवा : । अदिति : । पञ्च । जना : । अदिति : । जातम् । अदिति : । जनित्व मिति जनि = त्वम् ✱।।१०।।११।।१८८-०=१८८।।

मा । न : । मित्र : । वरुण : । अर्यमा । आयु : । इन्द्र : । ऋभुक्षा : । मरुत : । परि । ख्यन् ✱। यत् । वाजिन : । देवजा तस्येति देव = जातस्य । सप्ते : । प्रवक्ष्याम इति प्र = वक्ष्याम : । विदथे । वीर्याणि ✱।।१।। यत् ।( निर्णिजा । निर्णिजेति नि : = निजा )। रेक्णसा । प्रावृतस्य । रातिम् । गृभीताम् । मुखत : । नयन्ति ✱। सुप्रा ङिति सु = प्राङ् । अज : । मेम्यत् । विश्वरूप इति विश्व = रूप : । इन्द्रापूष्णो : । प्रियम् । अपि । एति । पाथ : ✱।।२।। एष : । छाग : । पुर : । अश्वेन । वाजिना । पूष्ण : । भाग : । नीयते । विश्वदेव्य इति विश्व = देव्य : ✱। अभिप्रिय मित्यभि = प्रियम् । यत् । पुरोळाशम् । अर्वता । त्वष्टा । इत् । एनम् । सौश्रवसाय । जिन्वति ✱।।३।। यत् । हविष्यम् । ऋतुश इत्यृतु = श : । देवयान मिति देव = यानम् । त्रि : । मानुषा : । परि । अश्वम् । नयन्ति ✱। अत्र । पूष्ण : । प्रथम : । भाग : । एति । यज्ञम् । देवेभ्य : । प्रतिवेदय न्निति प्रति = वेदयन् । अज : ✱।।४।।

| | |
|---|---|
| 27.32.a | होताऽध्वर्यु रावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्र : । |
| 27.32.b | तेन यज्ञेन स्वरङ्कृतेन  स्विष्टेन वक्षणा आ पृणध्वम् ।।५।। |
| 27.33.a | यूपव्रस्का उत ये यूपवाहा श्चषालँ य्ये अश्वयूपाय तक्षति । |
| 27.33.b | ये चार्वते पचनꣳ संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ।।६।। |
| 27.34.a | उप प्रागात्सुमन्मेऽधायि मन्म देवाना माशा उप वीतपृष्ठ : । |
| 27.34.b | अन्वेनँ विप्रा ऋषयो मदन्ति देवानाम् पुष्टे चकृमा सुबन्धुम् ।।७।। |
| 27.35.a | यद् वाजिनो दाम सन्दान मर्वतो या शीर्षण्या रशना रज्जुरस्य । |
| 27.35.b | यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ।।८।।(१२) |

| | |
|---|---|
| 27.36.a | यदश्वस्य क्रविषो मक्षिकाऽऽश यद्वा स्वरौ स्वधितौ रिप्तमस्ति । |
| 27.36.b | यद् धस्तयो : शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ।।१।। |
| 27.37.a | यदूवध्य मुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति । |
| 27.37.b | सुकृता तच्छमितार : कृण्वन्तूत मेधꣳशृतपाकम् पचन्तु ।।२।। |

होता । अध्वर्यु : । आवया इत्या = वया : । अग्निमिन्ध इत्यग्निम् = इन्ध : । ग्रावग्राभ इति ग्राव = ग्राभ : । उत । शꣳस्ता । सुविप्र इति सु = विप्र : *। तेन । यज्ञेन । स्वरङ्कृते नेति सु = अरङ्कृतेन । स्विष्टे नेति सु = इष्टेन । वक्षणा : । आ । पृणध्वम् *।।५।। यूपव्रस्का इति यूप = व्रस्का : । उत । ये । यूपवाहा इति यूप = वाहा : । चषालम् । ये । अश्वयूपायेत्यश्व = यूपाय । तक्षति *। ये । च । अर्वते । पचनम् । संभरन्तीति सं = भरन्ति । उतो इत्युतो । तेषाम् । अभिगूर्ति रित्यभि = गूर्ति : । न : । इन्वतु *।।६।। उप । प्र । अगात् । सुमदिति सु = मत् । मे । अधायि । मन्म । देवानाम् । आशा : । उप । वीतपृष्ठ इति वीत = पृष्ठ : *। अनु । एनम् । विप्रा : । ऋषय : । मदन्ति । देवानाम् । पुष्टे । चकृम । सुबन्धु मिति सु = बन्धुम् *।।७।। यत् । वाजिन : । दाम । सन्दान मिति सं = दानम् । अर्वत : । या । शीर्षण्या । रशना । रज्जु : । अस्य *। यत् । वा । घ । अस्य । प्रभृत मिति प्र = भृतम् । आस्ये । तृणम् । सर्वा । ता । ते । अपि । देवेषु । अस्तु *।।८।।१२।।१४७-०=१४७।।

यत् । अश्वस्य । क्रविष : । मक्षिका । आश । यत् । वा । स्वरौ । स्वधिता इति स्व = धितौ । रिप्तम् । अस्ति *। यत् । हस्तयो : । शमितु : । यत् । नखेषु । सर्वा । ता । ते । अपि । देवेषु । अस्तु *।।१।। यत् । ऊवध्यम् । उदरस्य । अपवातीत्यप = वाति । य : । आमस्य । क्रविष : । गन्ध : । अस्ति *। सुकृतेति सु = कृता । तत् । शमितार : । कृण्वन्तु । उत । मेधम् । शृतपाक मिति शृत = पाकम् । पचन्तु *।।२।।

| | |
|---|---|
| 27.38.a | यत्ते गात्रादग्निना पच्यमाना दभि शूलं निहतस्यावधावति । |
| 27.38.b | मा तद् भूम्या माश्लिषन्मा तृणेषु देवेभ्य स्तदुशद्भ्यो रातमस्तु ।।३।। |
| 27.39.a | ये वाजिनम् परिपश्यन्ति पक्वँ य्य ईमाहु : सुरभिर्निर्हरेति । |
| 27.39.b | ये चार्वतो माꣳसभिक्षा मुपासत उतो तेषामभिगूर्तिर्न इन्वतु ।।४।। |
| 27.40.a | यन्नीक्षणं माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि । |
| 27.40.b | ऊष्मण्याऽपिधाना चरूणामङ्का : सूना : परि भूषन्त्यश्वम् ।।५।। |
| 27.41.a | मा त्वाऽग्निर्ध्वनयीद् धूमगन्धि र्मोखा भ्राजन्त्यभि विक्त जघ्रि : । |
| 27.41.b | इष्टँ वीत मभिगूर्तँ वषट्कृतं तं देवास : प्रति गृभ्णन्त्यश्वम् ।।६।। |
| 27.42.a | निक्रमणं निषदनँ विवर्तनँ य्यच्च पड्वीशमर्वत : । |
| 27.42.b | यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ।।७।।(१३) |

| | |
|---|---|
| 27.43.a | यदश्वाय वास उपस्तृणन्त्यधीवासँ य्या हिरण्यान्यस्मै । |
| 27.43.b | सन्दान मर्वन्तं पड्वीशं प्रिया देवेष्वा यामयन्ति ।।१।।(१४) |

यत् । ते । गात्रात् । अग्निना । पच्यमानात् । अभि । शूलम् । निहतस्येति नि = हतस्य । अवधाव तीत्यव = धावति ॥ मा । तत् । भूम्याम् । आ । श्रिलषत् । मा । तृणेषु । देवेभ्य : । तत् । उशद्भ्य इत्युशत् = भ्य : । रातम् । अस्तु ॥३॥ ये । वाजिनम् । परिपश्यन्तीति परि = पश्यन्ति । पक्वम् । ये । ईम् । आहु : । सुरभि : । नि : । हर । इति ॥ ये । च । अर्वत : । माꣳसभिक्षामिति माꣳस = भिक्षाम् । उपासत इत्युप = आसते । उतो इत्युतो । तेषाम् । अभिगूर्ति रित्यभि = गूर्ति : । न : । इन्वतु ॥४॥ यत् । नीक्षण मिति नि = ईक्षणम् । माꣳस्पचन्या : । उखाया : । या । पात्राणि । यूष्ण : । आसेचनानीत्या = सेचनानि ॥ ऊष्मण्या । अपिधानेत्यपि = धाना । चरूणाम् । अङ्का : । सूना : । परि । भूषन्ति । अश्वम् ॥५॥ मा । त्वा । अग्नि : । ध्वनयीत् । धूमगन्धि रिति धूम = गन्धि : । मा । उखा । भ्राजन्ती । अभि । विक्त । जघ्रि : ॥ इष्टम् । वीतम् । अभिगूर्त मित्यभि = गूर्तम् । वषट्कृत मिति वषट् = कृतम् । तम् । देवास : । प्रति । गृभ्णन्ति । अश्वम् ॥६॥ निक्रमण मिति नि = क्रमणम् ।( निषदनम् । निसदन मिति नि = सदनम् )। विवर्तन मिति वि = वर्तनम् । यत् । च । पड्बीशम् । अर्वत : ॥ यत् । च । पपौ । यत् । च । घासिम् । जघास । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥७॥ १३॥१३७-०=१३७॥

यत् । अश्वाय । वास : । उपस्तृणन्तीत्युप = स्तृणन्ति । अधीवासम् । या । हिरण्यानि । अस्मै ॥ सन्दान मिति सं = दानम् । अर्वन्तम् । पड्बीशम् । प्रिया । देवेषु । आ । (यामयन्ति । यमयन्तीति यमयन्ति )॥१॥१४॥ १५-०=१५॥

| | |
|---|---|
| 27.44.a | इमा नु कं भुवना सीषधा मेन्द्रश्च विश्वे च देवा : । |
| 27.44.b | आदित्यै रिन्द्र : सगणो मरुद्भि रस्मभ्यम् भेषजा करत् । |
| 27.44.c | यज्ञञ्च नस्तन्वञ्च प्रजाञ्चादित्यैरिन्द्र : सह सीषधाति ।।१।। |
| 27.45.a | अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्य: । |
| 27.45.b | वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयि न्दा : । |
| 27.45.c | तं त्वा शोचिष्ठ दीदिव : सुम्नाय नूनमीमहे सखिभ्य : ।।२।।(१५) |

शादं दद्भिर्द्वे ।।२।। वातं प्राणेन द्वे ।।२।। मशकान्केशैरिति द्वे ।।२।। अग्ने : पक्षतिरेका ।।१।। इन्द्राग्न्यो : पक्षतिरेका ।।१।। मारुताꣳ स्कन्धा एका ।।१।। पूषणं वनिष्ठुनेत्येका ।।१।। इन्द्रस्य क्रोळो द्वे ।।२।। विधृतिमेका ।।१।। हिरण्यगर्भश्चतस्र : ।।४।। आ नो भद्रा दश ।।१०।। मा नो मित्रोऽष्ट ।।८।।यदश्वस्य सप्त ।।७।। यदश्वायैका ।।१।। इमा नु कं द्वे ।।२।। पञ्चदशानुवाकेषु पञ्चचत्वारिंशत् ।।४५।।

## ।। इति शुक्लयजु : काण्वसंहितायां सप्त विंशोऽध्याय : ।।

इमा । नु । कम् । भुवना । ( सीषधाम । सीसधामेति सीसधाम )। इन्द्र : । च । विश्वे । च । देवा : ✱। आदित्यै : । इन्द्र : । सगण इति स = गण : । मरुद्भि रिति मरुत् = भि : । अस्मभ्यम् । भेषजा । करत् ✱। यज्ञम् । च । न : । तन्वम् । च । प्रजामिति प्र = जाम् । च । आदित्यै : । इन्द्र : । सह ।( सीषधाति । सीसधातीति सीसधाति )✱।।१।। अग्ने । त्वम् । न : । अन्तम : । उत । त्राता । शिव : । भव । वरूथ्य : ✱। वसु : । अग्नि : । वसुश्रवा इति वसु = श्रवा : । अच्छ । नक्षि । द्युमत्तम मिति द्युमत् = तमम् । रयिम् । दा : ✱। तम् । त्वा । शोचिष्ठ । दीदिव इति दीदि = व : । सुम्नाय । नूनम् । ईमहे । सखिभ्य इति सखि = भ्य : ✱।।२।।१५।।५३-२५=२८।। आहत्य पद संख्या ।।८८४-६२=८२२।।

## इति सप्तविंशोऽध्याय :

# ।। इति सप्तविंशोऽध्याय : ।।

| Adhyaya | 27 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 40 | 0 | 40 |
| 2 | 40 | 0 | 40 |
| 3 | 27 | 0 | 27 |
| 4 | 26 | 0 | 26 |
| 5 | 32 | 0 | 32 |
| 6 | 24 | 0 | 24 |
| 7 | 22 | 0 | 22 |
| 8 | 34 | 0 | 34 |
| 9 | 26 | 0 | 26 |
| 10 | 73 | 37 | 36 |
| 11 | 188 | 0 | 188 |
| 12 | 147 | 0 | 147 |
| 13 | 137 | 0 | 137 |
| 14 | 15 | 0 | 15 |
| 15 | 53 | 25 | 28 |
| **Total** | **884** | **62** | **822** |

# अथाष्टा विंशोऽध्याय :

| | |
|---|---|
| 28.1.a | अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चाऽन्तरिक्षञ्च सन्नते ते मे सन्नमतामद आदित्यश्च द्यौश्च सन्नते ते मे सन्नतामद आपश्च वरुणश्च सन्नते ते मे सन्नमतामद : । |
| 28.1.b | सप्त सꣳसदो अष्टमी भूतसाधनी ।।१।। |
| 28.2.a | सकामाँ (२) - अध्वनस्कुरु सञ्ज्ञानमस्तु मेऽमुना । |
| 28.2.b | यथेमाँ वाचङ् कल्याणी मावदानि जनेभ्य : ।।२।। |
| 28.3.a | ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च । |
| 28.3.b | प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे काम : समृध्यता मुप माऽदो नमतु ।।३।।(१) |

| | |
|---|---|
| 28.4.a | बृहस्पते अति यदर्यो अर्हाद् द्युमद् विभाति क्रतुमज्जनेषु । |
| 28.4.b | यद् दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् । |
| 28.4.c | उपयामगृहीतोऽसि बृहस्पतये त्वैष ते योनि र्बृहस्पतये त्वा ।।१।।(२) |

| | |
|---|---|
| 28.5.a | इन्द्र गोम न्निहा याहि पिबा सोमꣳ शतक्रतो । |
| 28.5.b | विद्यद्भि र्ग्रावभि : सुतम् । |

# अथ अष्टाविंशोऽध्याय :

ॐ अग्नि : । च । पृथिवी । च । सन्नते इति सं = नते । ते इति ते । मे । सम् । नमताम् । अद : । वायु : । च । अन्तरिक्षम् । च । सन्नते इति सं = नते । ते इति ते । मे । सम् । नमताम् । अद : । आदित्य : । च । द्यौ : । च । सन्नते इति सं = नते । ते इति ते । मे । सम् । नमताम् । अद : । आप : । च । वरुण : *। च । सन्नते इति सं = नते । ते इति ते । मे । सम् । नमताम् । अद : । सप्त । सꣳसद इति सं = सद : । अष्टमी । भूतसाधनीति भूत = साधनी *।।१।। सकामा निति स = कामान् । अध्वन : । कुरु । सञ्ज्ञान मिति सं = ज्ञानम् । अस्तु । मे । अमुना *। यथा । इमाम् । वाचम् । कल्याणीम् । आवदानीत्या = वदानि । जनेभ्य : *।।२।। ब्रह्मराजन्याभ्याम् । शूद्राय । च । अर्याय । च । स्वाय । च । अरणाय *। च । प्रिय : । देवानाम् । दक्षिणायै । दातु : । इह । भूयासम् । अयम् । मे । काम : । सम् । ऋध्यताम् । उप । मा । अद : । नमतु *।।३।।१।।८१-२७=५४।।

बृहस्पते । अति । यत् । अर्य : । अर्हात् । द्युमदिति द्यु = मत् । विभातीति वि = भाति । क्रतुम दिति क्रतु = मत् । जनेषु *। यत् । दीदयत् । शवसा । ऋतप्रजातेत्यृत = प्रजाप । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् *। उपयामगृहीत इत्युपयाम = गृहीत : । असि । बृहस्पतये । त्वा । एष : । ते । योनि : । बृहस्पतये । त्वा *।।१।।२।।२७-२=२५।।

इन्द्र । गोम न्निति गो = मन् । इह । आ । याहि । पिब । सोमम् । शतक्रतो इति शत = क्रतो *। विद्यद्भि रिति विद्यत् = भि : । ग्रावभि रिति ग्राव = भि :

| | |
|---|---|
| 28.5.c | उपयामगृहीतोऽसीन्द्राय त्वा गोमत एष ते योनिरिन्द्राय त्वा गोमते ।।१।।(३) |

| | |
|---|---|
| 28.6.a | ऋतावानँ वैश्वानर मृतस्य ज्योतिषस्पतिम् । |
| 28.6.b | अजस्रङ् घर्ममीमहे । |
| 28.6.c | उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ।।१।।(४) |

| | |
|---|---|
| 28.7.a | वैश्वानरꣳ हवामह ऋतस्य ज्योतिषस्पतिम् । |
| 28.7.b | अजस्रङ् घर्ममीमहे । |
| 28.7.c | उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ।।१।।(५) |

| | |
|---|---|
| 28.8.a | वैश्वानरो न ऊतय आ प्र यातु परावत : । |
| 28.8.b | अग्नि रुक्थेन वाहसा । |
| 28.8.c | उपयामगृहीतोऽसि वैश्वानरायत्वैष ते योनिर्वैश्वानराय त्वा ।।१।।(६) |

| | |
|---|---|
| 28.9.a | वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवना नाम भिश्री : । |
| 28.9.b | इतो जातो विश्वमिदँ वि चष्टे वैश्वानरो यतते सूर्येण । |
| 28.9.c | उपयामगृहीतोऽसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ।।१।।(७) |

। सुतम् *। उपयामगृहीत इत्युपयाम = गृहीत : । असि । इन्द्राय । त्वा । गोमत इति गो = मते । एष : । ते । योनि : । इन्द्राय । त्वा । गोमत इति गो = मते *।।१।।३।।२२-२=२०।।

(ऋतावानम् । ऋतवान मित्यृत = वानम् )। वैश्वानरम् । ऋतस्य । ज्योतिष : । पतिम् *। अजस्रम् । घर्मम् । ईमहे *। उपयामगृहीत इत्युपयाम = गृहीत : । असि । वैश्वानराय । त्वा । एष : । ते । योनि : । वैश्वानराय । त्वा *।।१।।४।।१७-२=१५।।

वैश्वानरम् । हवामहे । ऋतस्य । ज्योतिष : । पतिम् *।। अजस्रम् । घर्मम् । ईमहे *। उपयामगृहीत इत्युपयाम = गृहीत : । असि । वैश्वानराय । त्वा । एष : । ते । योनि : । वैश्वानराय । त्वा *।।१।।५।।१७-९=८।।

वैश्वानर : । न : । ऊतये । आ । प्र । यातु । परावत इति परा = वत : *। अग्नि : । उक्थेन । वाहसा *। उपयामगृहीत इत्युपयाम = गृहीत : । असि । वैश्वानराय । त्वा । एष : । ते । योनि : । वैश्वानराय । त्वा *।।१।।६।।१९-१६=३।।

वैश्वानरस्य । सुमता इति सु = मतौ । स्याम । राजा । हि । कम् । भुवनानाम् । अभिश्री रित्यभि = श्री : *। इत : । जात : । विश्वम् । इदम् । वि । चष्टे । वैश्वानर : । यतते । सूर्येण *। उपयामगृहीत इत्युपयाम = गृहीत : । असि । वैश्वानराय । त्वा । एष : । ते । योनि : । वैश्वानराय । त्वा *।।१।।७।।२६-९=१७।।

| | |
|---|---|
| 28.10.a | मरुत्वाँ (२) - इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय । |
| 28.10.b | आसिञ्चस्व जठरे मध्व ऊर्मि न्त्वᳩ राजाऽसि प्रतिपत्सुतानाम् । |
| 28.10.c | उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनि रिन्द्राय त्वा मरुत्वते ॥१॥(८) |

| | |
|---|---|
| 28.11.a | महाँ (२) - इन्द्रो वज्रहस्त : षोळशी शर्म यच्छतु । |
| 28.11.b | हन्तु पाप्मानँ य्योऽस्मान्द्वेष्टि । |
| 28.11.c | उपयामगृहीतोऽसीन्द्राय त्वा षोळशिन एष ते योनि रिन्द्राय त्वा षोळशिने ॥१॥(९) |

| | |
|---|---|
| 28.12.a | अग्नि र्ऋषि : पवमान : पाञ्चजन्य : पुरोहित : । |
| 28.12.b | तमीमहे महागयम् ॥१॥(१०) |

| | |
|---|---|
| 28.13.a | अनु वीरैरनु पुष्यास्म गोभि रन्वश्वै रनु सर्वेण पुष्टै : । |
| 28.13.b | अनु द्विपदाऽनु चतुष्पदा वयं देवा नो यज्ञ मृतुथा नयन्तु ॥१॥(११) |

| | |
|---|---|
| 28.14.a | आ नो गोत्रा दर्दृहि गोपते गा : समस्मभ्यᳩ सनयो यन्तु वाजा : । |
| 28.14.b | दिवक्षा असि वृषभ सत्यशुष्मोऽस्मभ्यᳩ सुमघवन् बोधि गोदा : ॥१॥(१२) |

मरुत्वान् । इन्द्र । वृषभ : । रणाय । पिब । सोमम् ।( अनुष्वधम् । अनुस्वधमित्यनु = स्वधम् )। मदाय ✱। आ । सिञ्चस्व । जठरे । मध्व : । ऊर्मिम् । त्वम् । राजा । असि । प्रतिप दिति प्रति = पत् । सुतानाम् ✱। उपयामगृहीत इत्युपयाम = गृहीत : । असि । इन्द्राय । त्वा । मरुत्वते । एष : । ते । योनि : । इन्द्राय । त्वा । मरुत्वते ।।१।।८।।२९-११=१८।।

महान् । इन्द्र : । वज्रहस्त इति वज्र = हस्त : । षोळशी । शर्म । यच्छतु ✱। हन्तु । पाप्मानम् । य : । अस्मान् । द्वेष्टि ✱। उपयामगृहीत इत्युपयाम = गृहीत : । असि । इन्द्राय । त्वा । षोळशिने । एष : । ते । योनि : । इन्द्राय । त्वा । षोळशिने ।।।१।।९।।२२-११=११।।

अग्नि :। ऋषि :। पवमान :। पाञ्चजन्य इति पाञ्च = जन्य :। पुरोहित इति पुर : = हित : ✱। तम् । ईमहे । महागयमिति महा = गयम् ✱।।१।।१०।।८-०=८।।

अनु । वीरै : । अनु । पुष्यास्म । गोभि : । अनु । अश्वै : । अनु । सर्वेण । पुष्टै : ✱। अनु । द्विपदेति द्वि = पदा । अनु । (चतुष्पदा । चतु : पदेति चतु : = पदा )। वयम् । देवा : । न : । यज्ञम् । ऋतुथेत्यृतु = था । नयन्तु ✱।।१।।११।।२०-४=१६।।

आ । न : । गोत्रा । दर्दृहि । गोपत इति गो = पते । गा : । सम् । अस्मभ्यम् । सनय : । यन्तु । वाजा : ✱। दिवक्षा : । असि । वृषभ । सत्यशुष्म इति सत्य = शुष्म : । अस्मभ्यम् । सु । मघवन्निति मघ = वन् । बोधि । गोदा इति गो = दा : ✱।।१।।१२।।२०-०=२०।। आहत्य पद संख्या ।।३०८-९३=२१५।।

अग्निश्च तिस्र : ।।३।। बृहस्पत एका ।।१।। इन्द्र गोमन्नेका ।।१।। ऋतावानमेका ।।१।। वैश्वानरमेका ।।१।। वैश्वानर एका ।।१।। वैश्वानरस्य सुमतावेका ।।१।। मरुवाँ इन्द्र एका ।।१।। माहाँ इन्द्र एका ।।१।। अग्नि ऋषि एका ।।१।। अनुवीरैरेका ।।१।। आ नो गोत्रा इत्येका ।।१।। द्वादशानुवाकेषु चतुर्दश ।।१४।।

## ।। इति शुक्लयजु : काण्वसंहितायां अष्टा विंशोऽध्याय : ।।

# ।। इति अष्टाविंशोऽध्याय : ।।

| Adhyaya | 28 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 81 | 27 | 54 |
| 2 | 27 | 2 | 25 |
| 3 | 22 | 2 | 20 |
| 4 | 17 | 2 | 15 |
| 5 | 17 | 9 | 8 |
| 6 | 19 | 16 | 3 |
| 7 | 26 | 9 | 17 |
| 8 | 29 | 11 | 18 |
| 9 | 22 | 11 | 11 |
| 10 | 8 | 0 | 8 |
| 11 | 20 | 4 | 16 |
| 12 | 20 | 0 | 20 |
| **Total** | **308** | **93** | **215** |

# ।। अथैकोनत्रिंशोऽध्याय : ।।

| | |
|---|---|
| 29.1.a | समास्त्वाऽग्न ऋतवो वर्धयन्तु सँवत्सरा ऋषयो यानि सत्या । |
| 29.1.b | सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशश्चतस्र : ।।१।। |
| 29.2.a | सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय । |
| 29.2.b | मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशस : सन्तु माऽन्ये ।।२।। |
| 29.3.a | त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने सँवरणे भवा न : । |
| 29.3.b | सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् ।।३।। |
| 29.4.a | इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन्पूर्वचितो निकारिण : । |
| 29.4.b | क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृत : ।।४।। |
| 29.5.a | क्षत्रेणाग्ने स्वायु : सꣳ रभस्व मित्रेणाग्ने मित्रधेये यतस्व । |
| 29.5.b | सजातानाम् मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह ।।५।। |
| 29.6.a | अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने । |
| 29.6.b | विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीरꣳ रयिं न्दा : ।।६।। |

# अथ एकोनत्रिंशोऽध्याय :

ॐ समा : । त्वा । अग्ने । ऋतव : । वर्धयन्तु । सँवत्सरा : । ऋषय : । यानि । सत्या ✻। सम् । दिव्येन । दीदिहि । रोचनेन । विश्वा : । आ । भाहि । प्रदिश इति प्र = दिश : । चतस्र : ✻।।१।। सम् । च । इध्यस्व । अग्ने । प्र । च । बोधय । एनम् । उत् । च । तिष्ठ । महते । सौभगाय ✻। मा । च । रिषत् । उपसत्तेत्यु प = सत्ता । ते । अग्ने । ब्रह्माण : । ते । यशस : । सन्तु । मा । अन्ये ✻।।२।। त्वाम् । अग्ने । वृणते । ब्राह्मणा : । इमे । शिव : । अग्ने । सँवरण इति सं = वरणे । भव । न : ✻। सपत्नहेति सपत्न = हा । न : । अभिमातिजिदित्य भिमाति = जित् । च । स्वे । गये । जागृहि । अप्रयुच्छन्नित्यप्र = युच्छन् ✻।।३।। इह । एव । अग्ने । अधि । धारय । रयिम् । मा । त्वा । नि । क्रन् । पूर्वचित इति पूर्व = चित : । निकारिण इति नि = कारिण : ✻। क्षत्रम् । अग्ने । सुयम मिति सु = यमम् । अस्तु । तुभ्यम् । उपसत्ते त्युप = सत्ता । वर्धताम् । ते । (अनिष्टृत : । अनिस्तृत इत्यनि = स्तुत : )✻।।४।। क्षत्रेण । अग्ने । स्वायु रिति सु = आयु : । सम् । रभस्व । मित्रेण । अग्ने । मित्रधेय इति मित्र = धेये । यतस्व ✻। सजाताना मिति स = जातानाम् । मध्यमस्था इति मध्यम = स्था : । एधि । राज्ञाम् । अग्ने । विहव्य इति वि = हव्य : । दीदिहि । इह ✻।।५।। अति । निह : । अति । स्रिध : । अति । अचित्तिम् । अति । अरातिम् । अग्ने ✻। विश्वा । हि । अग्ने । दुरितेति दु : = इता । सहस्व । अथ । अस्मभ्यम् । सहवीर मिति सह = वीरम् । रयिम् । दा : ✻।।६।।

| | |
|---|---|
| 29.7.a | अनाधृष्यो जातवेदा अनिष्टृतो विराळग्ने क्षत्रभृद्दीदिहीह । |
| 29.7.b | विश्वा आशा : प्रमुञ्चन्मानुषीर्भिय : शिवाभिरद्य परि पाहि नो वृधे ॥७॥ |
| 29.8.a | बृहस्पते सवितर्बोधयैनꣳ सꣳशितं चित्सन्तराꣳ सꣳ शिशाधि । |
| 29.8.b | वर्धयैनं महते सौभगाय विश्व एनमनु मदन्तु देवा : ॥८॥ |
| 29.9.a | अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्च : । |
| 29.9.b | प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभि : ॥९॥ |
| 29.10.a | उद्वयं तमसस्परि स्व : पश्यन्त उत्तरम् । |
| 29.10.b | देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥१०॥(१) |

| | |
|---|---|
| 29.11.a | ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्ने : । |
| 29.11.b | द्युमत्तमा सुप्रतीकस्य सूनो : ॥१॥ |
| 29.12.a | तनूनपादसुरो विश्ववेदा देवो देवेषु देव : । |
| 29.12.b | पथो अनक्तु मध्वा घृतेन ॥२॥ |
| 29.13.a | मध्वा यज्ञं नक्षसे प्रीणानो नराशꣳसो अग्ने । |
| 29.13.b | सुकृद्देव : सविता विश्ववार : ॥३॥ |
| 29.14.a | अच्छायमेति शवसा घृतेनेळानो वह्निर्नमसा । |
| 29.14.b | अग्निꣳ स्रुचो अध्वरेषु प्रयत्सु ॥४॥ |

अनाधृष्य : । जातवेदा इति जात = वेदा : । (अनिष्टृत : । अनिस्तृत इत्यनि = स्तृत : )। विराळिति वि = राट् । अग्ने । क्षत्रभृ दिति क्षत्र - भृत् । दीदिहि । इह ✱। विश्वा : । आशा : । प्रमुञ्चन्निति प्र = मुञ्चन् । मानुषी : । भिय : । शिवाभि : । अद्य । परि । पाहि । न : । वृधे ✱।।७।। बृहस्पते । सवित : । बोधय । एनम् । स१शित मिति सं = शितम् । चित् । सन्तरा मिति सं = तराम् । सम् । शिशाधि ✱। वर्धय । एनम् । महते । सौभगाय । विश्वे । एनम् । अनु । मदन्तु । देवा : ✱।।८।। अमुत्रभूया दित्य मुत्र = भूयात् । अध । यत् । यमस्य । बृहस्पते । अभिशस्ते रित्यभि = शस्ते : । अमुञ्च : ✱। प्रति । औहताम् । अश्विना । मृत्युम् । अस्मात् । देवानाम् । अग्ने । भिषजा । शचीभि : ✱।।९।। उत् । वयम् । तमस : । परि । स्वरिति स्व : । पश्यन्त : । उत्तर मित्युत् = तरम् ✱। देवम् । देवत्रेति देव = त्रा । सूर्यम् । अगन्म । ज्योति : । उत्तममित्युत् = तमम् ✱।।१०।।१।।१८४-१३=१७१।।

ऊर्ध्वा : । अस्य । समिध इति सं = इध : । भवन्ति । ऊर्ध्वा । शुक्रा । शोची१षि । अग्ने : ✱। द्युमत्तमेति द्युमत् = तमा । सुप्रती कस्येति सु = प्रतीकस्य । सूनो : ✱।।१।। तनूनपा दिति तनू = नपात् । असुर : । विश्ववेदा इति विश्व = वेदा : । देव : । देवेषु । देव : ✱। पथ : । अनक्तु । मध्वा । घृतेन ✱।।२।। मध्वा । यज्ञम् । नक्षसे । प्रीणान : । नराश१स : । अग्ने ✱। सुकृदिति सु = कृत् । देव : । सविता । विश्ववार इति विश्व = वार : ✱।।३।। अच्छ । अयम् । एति । शवसा । घृतेन । ईळान : । वन्हि : । नमसा ✱। अग्निम् । स्रुच : । अध्वरेषु । प्रयत्स्विति प्रयत् = सु ✱।।४।।

| | |
|---|---|
| 29.15.a | स यक्षदस्य महिमानमग्ने : स ईम् मन्द्रा सुप्रयस : । |
| 29.15.b | वसुश्चेतिष्ठो वसुधातमश्च ।।५।। |
| 29.16.a | द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्ने : । |
| 29.16.b | उरुव्यचसो धाम्ना पत्यमाना : ।।६।। |
| 29.17.a | ते अस्य योषणे दिव्ये न योना उषासानक्ता । |
| 29.17.b | इमँ य्यज्ञमवतामध्वरं न : ।।७।। |
| 29.18.a | दैव्या होतारा ऊर्ध्वमध्वरं नोऽग्नेर्जिह्वामभि गृणीतम् । |
| 29.18.b | कृणुतं न : स्विष्टिम् ।।८।। |
| 29.19.a | तिस्रो देवीर्ब्बर्हिरिदꣳ सदन्त्विळा सरस्वती भारती । |
| 29.19.b | मही गृणाना ।।९।। |
| 29.20.a | तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीरम् । |
| 29.20.b | रायस्पोषँ वि ष्यतु नाभिमस्मे ।।१०।। |
| 29.21.a | वनस्पतेऽव सृजा रराणस्त्मना देवेषु । |
| 29.21.b | अग्निर्हव्यꣳ शमिता सूदयाति ।।११।। |
| 29.22.a | अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम् । |
| 29.22.b | विश्वे देवा हविरिदं जुषन्ताम् ।।१२।।(२) |

| | |
|---|---|
| 29.23.a | पीवो अन्ना रयिवृध : सुमेधा : श्वेत : सिषक्ति नियुतामभिश्री : । |

स : । यक्षत् । अस्य : । महिमानम् । अग्ने : । स : । ईम् । मन्द्रा । सुप्रयस इति सु = प्रयस : ✱। वसु : । चेतिष्ठ : । वसुधातम इति वसु = धातम : । च ✱।।५।। द्वार : । देवी : । अनु । अस्य । विश्वे । व्रता । ददन्ते । अग्ने : ✱। उरुव्यचस इत्युरु = व्यचस : । धाम्ना । पत्यमाना : ✱।।६।। ते इति ते । अस्य । योषणे इति योषणे । दिव्ये इति दिव्ये । न । योनौ । (उषासानक्ता । उषसानक्ते त्युषसानक्ता )✱। इमम् । यज्ञम् । अवताम् । अध्वरम् । न : ✱।।७।। दैव्या । होतारा । ऊर्ध्वम् । अध्वरम् । न : । अग्ने : । जिह्वाम् । अभि । गृणीतम् ✱। कृणुतम् । न : । स्विष्टि मिति सु = इष्टिम् ✱।।८।। तिस्र : । देवी : । बर्हि : । आ । इदम् । सदन्तु । इळा । सरस्वती । भारती ✱। मही । गृणाना ✱।।९।। तत् । न : । तुरीपम् । अद्भुतम् । पुरुक्षु । त्वष्टा । सुवीर मिति सु = वीरम् ✱। राय : । पोषम् । वि । स्यतु । नाभिम् । अस्मे इत्यस्मे ✱।।१०।। वनस्पते । अव । सृज । रराण : । त्मना । देवेषु ✱। अग्नि : । हव्यम् । शमिता । सूदयाति ✱।।११।। अग्ने । स्वाहा । कृणुहि । जातवेद इति जात = वेद : । इन्द्राय । हव्यम् ✱। विश्वे । देवा : । हवि : । इदम् । जुषन्ताम् ✱।।१२।।२।।१३६-०=१३६।।

पीवो अन्ना निति पीव : = अन्नान् । रयिवृध इति रयि = वृध : । सुमेधा इति सु = मेधा : । श्वेत : ।( सिषक्ति । सिसक्तीति सिसक्ति )। नियुता मिति नि = युताम् । अभिश्री रित्यभि = श्री : ✱।

| | |
|---|---|
| 29.23.b | ते वायवे समनसो वि तस्थुर्विश्वेन्नर : स्वपत्यानि चक्रु : ॥१॥ |
| 29.24.a | राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् । |
| 29.24.b | अध वायुं नियुत : सश्चत स्वा उत श्वेतँ वसुधिति न्निरेके ॥२॥ |
| 29.25.a | वायुरग्रेगा यज्ञप्री : साकं गन्मनसा यज्ञम् । |
| 29.25.b | शिवो नियुद्धि : शिवाभि : ॥३॥ |
| 29.26.a | प्र याभिर्यासि दाश्वाꣳसमच्छा नियुद्भिर्वाय इष्टये दुरोणे। |
| 29.26.b | नि नो रयिꣳ सुभोजसँ य्युवस्व नि वीरं गव्यमश्व्यञ्च राध : ॥४॥ |
| 29.27.a | वायो ये ते सहस्रिणो रथासस्तेभिरा गहि । |
| 29.27.b | नियुत्वान्त्सोमपीतये ॥५॥ |
| 29.28.a | एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च । |
| 29.28.b | तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वाय इह ता वि मुञ्च ॥६॥ |
| 29.29.a | नियुत्वान्वाय आ गह्ययꣳ शुक्रो अयामि ते । |
| 29.29.b | गन्ताऽसि सुन्वतो गृहम् ॥७॥ |
| 29.30.a | वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु । |
| 29.30.b | आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥८॥ |
| 29.31.a | आ नो नियुद्भि : शतिनीभिरध्वरꣳ सहस्रिणीभिरुप याहि यज्ञम् । |

ते । वायवे । समनस इति स = मनस : । वि । तस्थु : । विश्वा । इत् । नर : । स्वपत्यानीति सु = अपत्यानि । चक्रु : *॥१॥ राये । नु । यम् । जज्ञतु : । रोदसी इति रोदसी । इमे इतीमे । राये । देवी । धिषणा । धाति । देवम् *। अध । वायुम् । नियुत इति नि = युत : । सश्चत । स्वा : । उत । श्वेतम् । वसुधिति मिति वसु = धितिम् । निरेक इति नि = रेके *॥२॥ वायु : । अग्रेगा इत्यग्रे = गा : । यज्ञप्री रिति यज्ञ = प्री : । साकम् । गन् । मनसा । यज्ञम् *। शिव : । नियुद्भि रिति नियुत् = भि : । शिवाभि : *॥३॥ प्र । याभि : । यासि । दाश्वा९सम् । अच्छ । नियुद्भि रिति नियुत् = भि : । वायो इति वायो । इष्टये । दुरोणे *। नि । न : । रयिम् । सुभोजस मिति सु = भोजसम् । युवस्व । नि । वीरम् । गव्यम् । अश्व्यम् । च । राध : *॥४॥ वायो इति वायो । ये । ते । सहस्रिण : । रथास : । तेभि : । आ । गहि *। नियुत्वान् । सोमपीतय इति सोम = पीतये *॥५॥ एकया । च । दशभि रिति दश = भि : । च । स्वभूत इति स्व = भूते । द्वाभ्याम् । इष्टये । वि९शती । च *। तिसृभि रिति तिसृ = भि : । च । वहसे । त्रि९शता । च । नियुद्भि रिति नियुत् = भि : । वायो इति वायो । इह । ता । वि । मुञ्च *॥६॥ नियुत्वान् । वायो इति वायो । आ । गहि । अयम् । शुक्र : । अयामि । ते *। गन्ता । असि । सुन्वत : । गृहम् *॥७॥ वायो इति वायो । शुक्र : । अयामि । ते । मध्व : । अग्रम् । दिविष्टिषु *। आ । याहि । सोमपीतय इति सोम = पीतये । स्पार्ह : । देव । नियुत्वता *॥८॥ आ । न : । नियुद्भि रिति नियुत् = भि : । शतिनीभि : । अध्वरम् । सहस्रिणीभि : । उप । याहि । यज्ञम् *।

| | |
|---|---|
| 29.31.b | वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभि : सदा न : ॥९॥ |
| 29.32.a | तव वाय ऋतस्पते त्वष्टुर्जामातरद्भुत । |
| 29.32.b | अवाꣳस्या वृणीमहे ॥१०॥(३) |

| | |
|---|---|
| 29.33.a | हिरण्यगर्भ इत्येष : । |
| 29.33.b | येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्व : स्तभितँ य्येन नाक : । |
| 29.33.c | यो अन्तरिक्षे रजसो विमान : कस्मै देवाय हविषा विधेम ॥१॥ |
| 29.34.a | यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने । |
| 29.34.b | यत्राधि सूर अदितो विभाति कस्मै देवाय हविषा विधेम ॥२॥ |
| 29.35.a | आपो ह यद् बृहतीर्विश्वमायन्गार्भ न्दधाना जनयन्तीरग्निम् । |
| 29.35.b | ततो देवानाꣳ समवर्ततासुरेक : कस्मै देवाय हविषा विधेम ॥३॥ |
| 29.36.a | यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् । |
| 29.36.b | यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम । |
| 29.36.c | मा नो हिꣳसीज्जनिता य : पृथिव्या यो वा दिवꣳ सत्यधर्मा जजान । |
| 29.36.d | यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम । |
| 29.36.e | प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । |
| 29.36.f | यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥४॥(४) |

वायो इति वायो । अस्मिन् । सवने । मादयस्व । यूयम् । पात । स्वस्तिभि रिति स्वस्ति = भिः । सदा । नः ॥९॥ तव । वायो इति वायो ।( ऋतस्पते । ऋतपत इत्यृत = पते )। त्वष्टुः । जामातः । अद्भुत ॥ अवांऽसि । आ । वृणीमहे ॥१०॥३॥१४९-०=१४९॥

हिरण्यगर्भः । इति । एषः ॥ येन । द्यौः । उग्रा । पृथिवी । च । दृळ्हा । येन । स्व रिति स्वः । स्तभितम् । येन । नाकः ॥ यः । अन्तरिक्षे । रजसः । विमान इति वि = मानः । कस्मै । देवाय । हविषा । विधेम ॥१॥ यम् । क्रन्दसी इति क्रन्दसी । अवसा । तस्तभाने इति तस्तभाने । अभि । एक्षेताम् । मनसा । रेजमाने इति रेजमाने ॥ यत्र । अधि । सूरः । उदित इत्युत् = इतः । विभातीति वि = भाति ॥ कस्मै । देवाय । हविषा । विधेम ॥२॥ आपः । ह । यत् । बृहतीः । विश्वम् । आयन् । गर्भम् । दधानाः । जनयन्तीः । अग्निम् ॥ ततः । देवानाम् । सम् । अवर्तत । असुः । एकः ॥ कस्मै । देवाय । हविषा । विधेम ॥३॥ यः । चित् । आपः । महिना । पर्यपश्यदिति परि = अपश्यत् । दक्षम् । दधानाः । जनयन्तीः । यज्ञम् ॥ यः । देवेषु । अधि । देवः । एकः । आसीत् ॥ कस्मै । देवाय । हविषा । विधेम ॥ मा । नः । हिंऽसीत् । जनिता । यः । पृथिव्याः । यः । वा । दिवम् । सत्यधर्मेति सत्य = धर्मा । जजान ॥ यः । च । अपः । चन्द्राः । बृहतीः । जजान ॥ कस्मै । देवाय । हविषा । विधेम ॥ प्रजापत इति प्रजा = पते । न । त्वत् । एतानि । अन्यः । विश्वा । जातानि ॥ परि । ता । बभूव ॥ यत्कामा इति यत् = कामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् ।

| | |
|---|---|
| 29.37.a | अग्न आयूꣳषि पवस आसुवोर्जमिषं च न : । |
| 29.37.b | आरे बाधस्व दुच्छुनाम् ॥१॥ |
| 29.38.a | अग्ने पवस्व स्वपा अस्मे वर्च : सुवीर्यम् । |
| 29.38.b | दधद्रयिं मयि पोषम् ॥२॥ |
| 29.39.a | अग्नि ऋषि : पवमान : पाञ्चजन्य : पुरोहित : । |
| 29.39.b | तमीमहे महागयम् ॥३॥ |
| 29.40.a | अभि त्वा शूर नोनुमोऽदुग्धा इव धेनव : । |
| 29.40.b | ईशानमस्य जगत : स्वर्दृशमीशानमिन्द्र तस्थुष : ॥४॥ |
| 29.41.a | न त्वावाँ(२) - अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । |
| 29.41.b | अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥५॥ |
| 29.42.a | त्वामिद्धि हवामहे सातौ वाजस्य कारव : । |
| 29.42.b | त्वाँ वृत्रेष्विन्द्र सत्पति न्नरस्त्वां काष्ठास्वर्वत : ॥६॥ |
| 29.43.a | स त्वं नश्चित्र वज्रहस्त धृष्णुया मह : स्तवानो अद्रिव : । |
| 29.43.b | गामश्वꣳ रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥७॥ |
| 29.44.a | कया नश्चित्र आ भुवदूती सदावृध : सखा । |
| 29.44.b | कया श्चिष्ठया वृता ॥८॥ |
| 29.45.a | कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धस : । |

स्याम । पतय : । रयीणाम् *४।।४।।११९-५०=६९।।

अग्ने । आयूꣳषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । न : *। आरे । बाधस्व । दुच्छुनाम् *।।१।। अग्ने । पवस्व । स्वपा इति सु = अपा : । अस्मे इत्यस्मे । वर्च : । सुवीर्य मिति सु = वीर्यम् *। दधत् । रयिम् । मयि । पोषम् *।।२।। अग्नि : । ऋषि : । पवमान : । पाञ्चजन्य इति पाञ्च = जन्य : । पुरोहित इति पुर : = हित : *। तम् । ईमहे । महागयमिति महा = गयम् *।।३।। अभि । त्वा । शूर । नोनुम : । अदुग्धा इवेत्यदुग्धा : = इव । धेनव : *। ईशानम् । अस्य । जगत : । स्वर्दृश मिति स्व : = दृशम् । ईशानम् । इन्द्र । तस्थुष : *।।४।। न । त्वावा निति त्वा = वान् । अन्य : । दिव्य : । न । पार्थिव : । न । जात : । न । जनिष्यते *। (अश्वायन्त : । अश्वयन्त इत्यश्व = यन्त : )। मघवन्निति मघ = वन् । इन्द्र । वाजिन : । गव्यन्त : । त्वा । हवामहे *।।५।। त्वाम् । इत् । हि । हवामहे । सातौ । वाजस्य । कारव : *। त्वाम् । वृत्रेषु । इन्द्र । सत्पति मिति सत् = पतिम् । नर : । त्वाम् । काष्ठासु । अर्वत : *।।६।। स : । त्वम् । न : । चित्र । वज्रहस्तेति वज्र = हस्त । धृष्णुयेति धृष्णु = या । मह : । स्तवान : । अद्रिव इत्यद्रि = व : *। गाम् । अश्वम् । रथ्यम् । इन्द्र । सम् । किर । सत्रा । वाजम् । न । जिग्युषे *।।७।। कया । न : । चित्र : । आ । भुवत् । ऊती । सदावृध इति सदा = वृध : । सखा *। कया । शचिष्ठया । वृता *।।८।। क : । त्वा । सत्य : । मदानाम् । मꣳहिष्ठ : । मत्सत् । अन्धस : *।

| | |
|---|---|
| 29.45.b | दृळ्हा चिदारुजे वसु ।।९।। |
| 29.46.a | अभी षु ण : सखीनामविता जरितॄणाम् । |
| 29.46.b | शतं भवास्यूतये ।।१०।। |
| 29.47.a | यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे । |
| 29.47.b | प्रप्र वयममृत ञ्जातवेदसं प्रियं मित्रं न शꣳसिषम् ।।११।। |
| 29.48.a | ऊर्जो नपातꣳ स हिनाऽयमस्मयुर्दाशेम हव्यदातये । |
| 29.48.b | भुवद्वाजेष्वविता भुवद् वृध उत त्राता तनूनाम् ।।१२।।(५) |

| | |
|---|---|
| 29.49.a | सँवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि । |
| 29.49.b | उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्धमासास्ते कल्पन्तां<br>मासास्ते कल्पन्तामृतवस्ते कल्पन्ताꣳ सँवत्सरस्ते कल्पताम् ।।१।। |
| 29.50.a | प्रेत्या एत्यै सं चाञ्च प्र च सारय । |
| 29.50.b | सुपर्णचिदसि तया देवतयाऽङ्गिरस्वद् ध्रुव : सीद ।।२।।(६) |

समास्त्वा दश ।।१०।। ऊर्ध्वा द्वादश ।।१२।। पीवो अन्नन्दश ।।१०।। हिरण्यगर्भश्चतस्र : ।।४।। अग्न आयूꣳषि द्वादश ।।१२।। सँवत्सरो द्वे ।।२।। षळनुवाकेपु पञ्चाशत् ।।५०।।

## ।। इति शुक्लयजु : काण्वसंहितायां एकोनत्रिंशोध्याय : ।।२९।।

दृळ्हा । चित् । आरुजे । वसु *।।९।। अभि । सु । न : । सखीनाम् । अविता । जरितॄणाम् *। शतम् । भवासि । ऊतये *।।१०।। यज्ञा यज्ञेति यज्ञा = यज्ञा । व : । अग्नये । गिरा गिरेति गिरा = गिरा । च । दक्षसे *। प्रप्रेति प्र = प्र । वयम् । अमृतम् । जातवेदस मिति जात = वेदसम् । प्रियम् । मित्रम् । न । शꣳसिषम् *।।११।। ऊर्ज : । नपातम् । स : । हिना । अयम् । अस्मयुरित्यस्म = यु : । दाशेम । हव्यदातय इति हव्य = दातये *। भुवत् । वाजेषु । अविता । भुवत् । वृध : । उत । त्राता । तनूनाम् *।।१२।।५।।१५५-३०=१२५।।

सँवत्सर : । असि । परिवत्सर इति परि = वत्सर : । असि । इदावत्सर : । असि । इद्वत्सर इतीत् = वत्सर : । असि । वत्सर : । असि । उषस : । ते । कल्पन्ताम् । अहोरात्रा : । ते । कल्पन्ताम् । अर्धमासा इत्यर्ध = मासा : । ते । कल्पन्ताम् । मासा : । ते । कल्पन्ताम् । ऋतव : । ते । कल्पन्ताम् । सँवत्सर : । ते । कल्पताम् ।।१।। प्रेत्या इति प्र = इत्यै । एत्या इत्या = इत्यै । सम् । च । अञ्च । प्र । च । सारय । सुपर्णचिदिति सुपर्ण = चित् । असि । तया । देवतया । अङ्गिरस्वत् । ध्रुव : । सीद *।।२।।६।।४३-१२=३१।। **आहत्य पद संख्या ।।७८६-१०५=६८१।।**

## इति एकोनत्रिंशोऽध्याय :

# ।। इति एकोनत्रिंशोऽध्याय : ।।

| Adhyaya | 29 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 184 | 13 | 171 |
| 2 | 136 | 0 | 136 |
| 3 | 149 | 0 | 149 |
| 4 | 119 | 50 | 69 |
| 5 | 155 | 30 | 125 |
| 6 | 43 | 12 | 31 |
| Total | 786 | 105 | 681 |

# ।। अथ त्रिंशोऽध्याय : ।।

| | |
|---|---|
| 30.1.a | होता यक्षत्समिधेन्द्रमिळस्पदे नाभा पृथिव्या अधि । |
| 30.1.b | दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणीसहाँ वेत्वाज्यस्य होतर्यज ।।१।। |
| 30.2.a | होता यक्षत्तनूनपातमूतिभिर्जेतारमपराजितम् । |
| 30.2.b | इन्द्र न्देवꣳ स्वर्विदम् पथिभिर्मधुमत्तमैर्नराशꣳसेन तेजसा वेत्वाज्यस्य होतर्यज ।।२।। |
| 30.3.a | होता यक्षदिळाभिरिन्द्रमीळितमाजुह्वानममर्त्यम् । |
| 30.3.b | देवो देवै : सवीर्यो वज्रहस्त : पुरन्दरो वेत्वाज्यस्य होतर्यज ।।३।। |
| 30.4.a | होता यक्षद् बर्हिषीन्द्र न्निषद्वरँ वृषभं नर्यापसम् । |
| 30.4.b | वसुभी रुद्रैरादित्यै : सयुग्भिर्बर्हिराऽसदद्वेत्वाज्यस्य होतर्यज ।।४।। |
| 30.5.a | होता यक्षदोजो न वीर्यꣳ सहो द्वार इन्द्रमवर्धयन् । |
| 30.5.b | सुप्रायणा अस्मिन्यज्ञे वि श्रयन्तामृतावृधो द्वार इन्द्राय मीळ्हुषे व्यन्त्वाज्यस्य होतर्यज ।।५।। |
| 30.6.a | होता यक्षदुषे इन्द्रस्य धेनू सुदुघे मातरा मही । |

# अथ त्रिंशोऽध्याय :

ॐ होता । यक्षत् । समिधेति सं = इधा । इन्द्रम् । इळ : । पदे । नाभा । पृथिव्या : । अधि *। दिव : । वर्ष्मन् । सम् । इध्यते । ओजिष्ठ : ।( चर्षणीसहाम् । चर्षणिसहा मिति चर्षणि = सहाम् )। वेतु *। आज्यस्य । होत : । यज *।।१।। होता । यक्षत् । तनूनपात मिति तनू = नपातम् । ऊतिभि रित्यूति = भि : । जेतारम् । अपराजित मित्यपरा = जितम् *। इन्द्रम् । देवम् । स्वर्विद मिति स्व : = विदम् । पथिभि रिति पथि = भि : । मधुमत्तमै रिति मधुमत् = तमै : । नराशꣳसेन । तेजसा *। वेतु । आज्यस्य । होत : । यज *।।२।। होता । यक्षत् । इळाभि : । इन्द्रम् । ईळितम् । आजुह्वान मित्या = जुह्वानम् । अमर्त्यम् *। देव : । देवै : । सवीर्य इति स = वीर्य : । वज्रहस्त इति वज्र = हस्त : । पुरन्दर इति पुरं = दर : *। वेतु । आज्यस्य । होत : । यज *।।३।। होता । यक्षत् । बर्हिषि । इन्द्रम् । (निषद्वरम् । निसद्वरमिति निसत् = वरम् )। वृषभम् । नर्यापस मिति नर्य = अपसम् *। वसुभि रिति वसु = भि : । रुद्रै : । आदित्यै : । सयुग्भि रिति सयुक् = भि : । बर्हि : । आ । असदत् *। वेतु । आज्यस्य । होत : । यज *।।४।। होता । यक्षत् । ओज : । न । वीर्यम् । सह : । द्वार : । इन्द्रम् । अवर्धयन् *। ( सुप्रायणा : । सुप्रायना इति सु = प्रायना : )। अस्मिन् । यज्ञे । वि । श्रयन्ताम् ।( ऋतावृध : । ऋतवृध इत्यृत = वृध : )। द्वार : । इन्द्राय । मीळ्हुषे । व्यन्तु *। आज्यस्य । होत : । यज *।।५।। होता । यक्षत् । उषेइत्युषे । इन्द्रस्य । धेनू इति धेनू । सुदुघे इति सु = दुघे । मातरा । मही इति मही *।

| | |
|---|---|
| 30.6.b | सवातरौ न तेजसा वत्समिन्द्रमवर्धतॉं वीतामाज्यस्य होतर्यज ।।६।। |
| 30.7.a | होता यक्षद्दैव्या होतारा भिषजा सखाया हविषेन्द्रम् भिषज्यत : । |
| 30.7.b | कवी देवौ प्रचेतसा इन्द्राय धत्त इन्द्रियँ वीतामाज्यस्य होतर्यज ।।७।। |
| 30.8.a | होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपस इळा सरस्वती भारती मही : । |
| 30.8.b | इन्द्र पत्नीर्हविष्मतीर्व्यन्त्वाज्यस्य होतर्यज ।।८।। |
| 30.9.a | होता यक्षत्त्वष्टारमिन्द्र न्देवं भिषजꣳ सुयजङ् घृतश्रियम् । |
| 30.9.b | पुरुरूपꣳ सुरेतसं मघोनमिन्द्राय त्वष्टा दधदिन्द्रियाणि वेत्वाज्यस्य होतर्यज ।।९।। |
| 30.10.a | होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुं धियो जोष्टारमिन्द्रियम् । |
| 30.10.b | मध्वा समञ्जन्पथिभि : सुगेभि : स्वदाति यज्ञं मधुना घृतेन वेत्वाज्यस्य होतर्यज ।।१०।। |
| 30.11.a | होता यक्षदिन्द्रꣳ स्वाहाऽऽज्यस्य स्वाहा मेदस : स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा हव्यसूक्तीनाम् । |
| 30.11.b | स्वाहा देवा आज्यपा जुषाणा इन्द्र आज्यस्य व्यन्तु होतर्यज।।११।।(१) |

सवातरा इति स = वातरौ । न । तेजसा । वत्सम् । इन्द्रम् । अवर्धताम् । वीताम् ✱। आज्यस्य । होत : । यज ✱।।६।। होता । यक्षत् । दैव्या । होतारा । भिषजा । सखाया । हविषा । इन्द्रम् । भिषज्यत : ✱। कवी इति कवी । देवौ । प्रचेतसा इति प्र = चेतसौ । इन्द्राय । धत्त : । इन्द्रियम् ✱। वीताम् । आज्यस्य । होत : । यज ✱।।७।। होता । यक्षत् । तिस्र : । देवी : । न । भेषजम् । त्रय : । त्रिधातव इति त्रि = धातव : । अपस : । इळा । सरस्वती । भारती । मही : ✱। इन्द्रपत्नी रितीन्द्र = पत्नी : । हविष्मती : ✱। व्यन्तु । आज्यस्य । होत : । यज ✱।।८।। होता । यक्षत् । त्वष्टारम् । इन्द्रम् । देवम् । भिषजम् । सुयज मिति सु = यजम् । घृतश्रिय मिति घृत = श्रियम् ✱। पुरुरूप मिति पुरु = रूपम् । सुरेतस मिति सु = रेतसम् । मघोनम् ✱। इद्राय । त्वष्टा । दधत् । इन्द्रियाणि । वेतु । आज्यस्य । होत : । यज ✱।।९।। होता । यक्षत् । वनस्पतिम् । शमितारम् । शतक्रतु मिति शत = क्रतुम् । धिय : । जोष्टारम् । इन्द्रियम् ✱। मध्वा । समञ्जन्निति सं = अञ्जन् । पथिभि रिति पथि = भि : । सुगेभि रिति सु = गेभि : । स्वदाति । यज्ञम् । मधुना । घृतेन ✱। वेतु । आज्यस्य । होत : । यज ✱।।१०।। होता । यक्षत् । इन्द्रम् । स्वाहा । आज्यस्य । स्वाहा । मेदस : । स्वाहा । स्तोकानाम् । स्वाहा । स्वाहाकृतीना मिति स्वाहा = कृतीनाम् । स्वाहा । हव्यसूक्तीना मिति हव्य = सूक्तीनाम् ✱। स्वाहा । देवा : । आज्यपा इत्याज्य = पा : । जुषाणा : । इन्द्र : । आज्यस्य ✱। व्यन्तु । होत : । यज ✱।।११।१।।२०९-८३=१२६।।

| | |
|---|---|
| 30.12.a | देवं बर्हिरिन्द्र॑ꣳ सुदेवं देवैर्वीरवत्स्तीर्णं वेद्यामवर्धयत् । |
| 30.12.b | वस्तोर्वृतं प्राक्तोर्भृत॑ꣳ राया बर्हिष्मतोऽत्यगाद्वसुवने वसुधेयस्य वेतु यज ॥१॥ |
| 30.13.a | देवीर्द्वार इन्द्र॑ꣳ सङ्घाते वीड्वीर्यामन्नवर्धयन् । |
| 30.13.b | आ वत्सेन तरुणेन कुमारेण च मीवताऽपार्वाण॑ꣳ रेणुककाटं नुदन्ताँ वसुवने वसुधेयस्य व्यन्तु यज ॥२॥ |
| 30.14.a | देवी उषासानक्तेन्द्रं यज्ञे प्रयत्यह्वेताम् । |
| 30.14.b | दैवीर्विश : प्रायासिष्टा॑ꣳ सुप्रीते सुधिते वसुवने वसुधेयस्य वीताँ यज ॥३॥ |
| 30.15.a | देवी जोष्ट्री वसुधिती देवमिन्द्रमवर्धताम् । |
| 30.15.b | अयाव्यन्याऽघा द्वेषा॑ꣳस्याऽन्या वक्षद्वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीताँ यज ॥४॥ |
| 30.16.a | देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रमवर्धताम् । |
| 30.16.b | इषमूर्जमन्या वक्षत्सग्धि॑ꣳ सपीतिमन्या नवेन पूर्व न्दयमाने पुराणेन नवमधातामूर्जमूर्जाहुती ऊर्जयमाने वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीताँ यज ॥५॥ |

देवम् । बर्हिः । इन्द्रम् । सुदेवमिति सु = देवम् । देवैः । वीरव दिति वीर = वत् । स्तीर्णम् । वेद्याम् । अवर्धयत् ✱। वस्तोः । वृतम् । प्र । अक्तोः । भृतम् । राया । बर्हिष्मत: । अति । अगात् ✱। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज ✱।।१।। देवीः । द्वारः । इन्द्रम् । सङ्घात इति सं = घाते । वीड्वीः । यामन् । अवर्धयन् ✱। आ । वत्सेन । तरुणेन । कुमारेण । च । मीवता । अप । अर्वाणम् । रेणुकंकाट मिति रेणु = कंकाटम् । नुदन्ताम् ✱। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज ✱।।२।। देवी इति देवी । ( उषासानक्ता । उषसा नक्तेत्यु षसानक्ता )। इन्द्रम् । यज्ञे । प्रयतीति प्र = यति । अह्वेताम् ✱। दैवीः । विशः । प्र । अयासिष्टाम् । सुप्रीते इति सु = प्रीते । सुधिते इति सु = धिते ✱। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वीताम् । यज ✱।।३।। देवी इति देवी । जोष्ट्री इति जोष्ट्री । वसुधिती इति वसु = धिती । देवम् । इन्द्रम् । अवर्धताम् ✱। अयावि । अन्या । अघा । द्वेषांꣳसि । आ । अन्या । वक्षत् । वसु । वार्याणि । यजमानाय । शिक्षिते इति शिक्षिते ✱। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वीताम् । यज ✱।।४।। देवी इति देवी । ऊर्जाहुती इत्यूर्ज = आहुती । दुघे इति दुघे । सुदुघे इति सु = दुघे । पयसा ✱। इन्द्रम् । अवर्धताम् ✱। इषम् । ऊर्जम् । अन्या । वक्षत् । सग्धिम् । सपीति मिति स = पीतिम् । अन्या । नवेन । पूर्वम् । दयमाने इति दयमाने । पुराणेन । नवम् । अधाताम् । ऊर्जम् । ऊर्जाहुती इत्यूर्ज = आहुती । ऊर्जयमाने इत्यूर्जयमाने ✱। वसु । वार्याणि । यजमानाय । शिक्षिते इति शिक्षिते । वसुवन इति वसु = वने ।

| | |
|---|---|
| 30.17.a | देवा दैव्या होतारा देवमिन्द्रमवर्धताम् । |
| 30.17.b | हताघशꣳसा आऽभार्ष्टाँ वसु वार्याणि यजमानाय शिक्षितौ वसुवने वसुधेयस्य वीताँ य्यज ।।६।। |
| 30.18.a | देवीस्तिस्रस्तिस्रो देवी : पतिमिन्द्रमवर्धयन् । |
| 30.18.b | अस्पृक्षद्भारती दिवꣳ रुद्रैर्यज्ञꣳ सरस्वतीळा वसुमती गृहान्वसुवने वसुधेयस्य व्यन्तु यज ।।७।। |
| 30.19.a | देव इन्द्रो नराशꣳसस्त्रिवरूथस्त्रिवन्धुरो देवमिन्द्रमवर्धयत् । |
| 30.19.b | शतेन शितिपृष्ठानामाहित : सहस्रेण प्र वर्तते मित्रावरुणेदस्य होत्रमर्हतो बृहस्पति : स्तोत्रमश्विनाऽऽध्वर्यवँ वसुवने वसुधेयस्य वेतु यज ।।८।। |
| 30.20.a | देवो देवैर्वनस्पतिर्हिरण्यपर्णो मधुशाख : सुपिप्पलो देवमिन्द्रमवर्धयत् । |
| 30.20.b | दिवमग्रेणास्पृक्षदाऽन्तरिक्षं पृथिवीमदृꣳहीद्वसुवने वसुधेयस्य वेतु यज ।।९।। |
| 30.21.a | देवं बर्हिर्वारितीनां देवमिन्द्रमवर्धयत् । |
| 30.21.b | स्वासस्थमिन्द्रेणासन्नमन्या बर्हीꣳष्यभ्यभूद्वसुवने वसुधेयस्य वेतु यज ।।१०।। |
| 30.22.a | देवो अग्नि : स्विष्टकृद्देवमिन्द्रमवर्धयत् । |

वसुधेयस्येति वसु = धेयस्य । वीताम् । यज *।।५।। देवा : । दैव्या । होतारा । देवम् । इन्द्रम् । अवर्धताम् *। हताघशꣳसा इति हत = अघशꣳसौ । आ । अभार्ष्टाम् । वसु । वार्याणि । यजमानाय । शिक्षितौ *। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वीताम् । यज *।।६।। देवी : । तिस्र : । तिस्र : । देवी : । पतिम् । इन्द्रम् । अवर्धयन् *। अस्पृक्षत् । भारती । दिवम् । रुद्रै : । यज्ञम् । सरस्वती । इळा । वसुम तीति वसु = मती । गृहान् *। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज *।।७।। देव : । इन्द्र : । नराशꣳस : । त्रिवरूथ इति त्रि = वरूथ : । त्रिवन्धुर इति त्रि = वन्धुर : *। देवम् । इन्द्रम् । अवर्धयत् *। शतेन । शितिपृष्ठाना मिति शिति = पृष्ठानाम् । आहित इत्या = हित : । सहस्रेण । प्र । वर्तते । मित्रावरुणा । इत् । अस्य । होत्रम् । अर्हत : । बृहस्पति : । स्तोत्रम् । अश्विना । आध्वर्यवम् *। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज *।।८।। देव : । देवै : । वनस्पति : । हिरण्यपर्ण इति हिरण्य = पर्ण : । मधुशाख इति मधु = शाख : । सुपिप्पल इति सु = पिप्पल : *। देवम् । इन्द्रम् । अवर्धयत् *। दिवम् । अग्रेण । अस्पृक्षत् । आ । अन्तरिक्षम् । पृथिवीम् । अदृꣳहीत् *। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज *।।९।। देवम् । बर्हि : । वारितीनाम् । देवम् । इन्द्रम् । अवर्धयत् *। स्वासस्थमिति सु = आसस्थम् । इन्द्रेण । आसन्न मित्या = सन्नम् । अन्या । बर्हीꣳषि । अभि । अभूत् *। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज *।।१०।। देव : । अग्नि : । स्विष्टकृदिति स्विष्ट = कृत् । देवम् । इन्द्रम् । अवर्धयत् *।

| | |
|---|---|
| 30.22.b | स्विष्टं कुर्वन् त्स्विष्टकृत्स्विष्टमद्य करोतु नो वसुवने वसुधेयस्य वेतु यज ।।११।। |
| 30.23.a | अग्निमद्य होतारमवृणीतायँ य्यजमान : पचन्पक्ती : पचन्पुरोळाशम् बध्नन्निन्द्राय च्छागम् । |
| 30.23.b | सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय च्छागेन । |
| 30.23.c | अघत्तं मेदस्त : प्रति पचतागृभीदवीवृधत पुरोळाशेन । |
| 30.23.d | त्वामद्य ऋषे ।।१२।।(२) |

| | |
|---|---|
| 30.24.a | होता यक्षत्समिधानं महद्यश : सुसमिद्धँ वरेण्यमग्निमिन्द्रँ वयोधसम् । |
| 30.24.b | गायत्री ञ्छन्द इन्द्रियं त्र्यविङ् गाँ वयो दधद्वेत्वाज्यस्य होतर्यज ।।१।। |
| 30.25.a | होता यक्षत्तनूनपातमुद्भिदँ य्यं गर्भमदितिर्दधे शुचिमिन्द्रँ वयोधसम् । |
| 30.25.b | उष्णिहं छन्द इन्द्रियं दित्यवाहं गाँ वयो दधद्वेत्वाज्यस्य होतर्यज ।।२।। |
| 30.26.a | होता यक्षदीळेन्यमीळितँ वृत्रहन्तममिळाभिरीड्यꣳ सह : सोममिन्द्रँ वयोधसम् । |
| 30.26.b | अनुष्टुभं छन्द इन्द्रियं पञ्चाविङ् गाँ वयो दधद्वेत्वाज्यस्य होतर्यज ।।३।। |

स्विष्ट मिति सु = इष्टम् । कुर्वन् । स्विष्टकृदिति स्विष्ट = कृत् । स्विष्ट मिति सु = इष्टम् । अद्य । करोतु । न : ✱। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज ✱।।११।। अग्निम् । अद्य । होतारम् । अवृणीत । अयम् । यजमान : । पचन् । पक्ती : । पचन् । पुरोळाशम् । बध्नन् । इन्द्राय । छागम् ✱। सूपस्था इति सु = उपस्था : । अद्य । देव : । वनस्पति : । अभवत् । इन्द्राय । छागेन ✱। अघत् । तम् । मेदस्त : । प्रति । पचत । अगृभीत् । अवीवृधत । पुरोळाशेन ✱। त्वाम् । अद्य । ऋषे ।।१२।।२।।२६०-११५=१४५।।

होता । यक्षत् । समिधान मिति सं = इधानम् । महत् । यश : । सुसमिद्ध मिति सु = समिद्धम् । वरेण्यम् । अग्निम् । इन्द्रम् । वयोधस मिति वय : = धसम् ✱। गायत्रीम् । छन्द : । इन्द्रियम् । त्र्यवि मिति त्रि = अविम् । गाम् । वय : । दधत् ✱। वेतु । आज्यस्य । होत : । यज ✱।।१।। होता । यक्षत् । तनूनपात मिति तनू = नपातम् । उद्भिद मित्युत् = भिदम् । यम् । गर्भम् । अदिति : । दधे । शुचिम् ✱। इन्द्रम् । वयोधस मिति वय : = धसम् ✱। उष्णिहम् । छन्द : । इन्द्रियम् । दित्यवाह मिति दित्य = वाहम् ✱। गाम् । वय : । दधत् । वेतु । आज्यस्य । होत : । यज ✱।।२।। होता । यक्षत् । ईळेन्यम् । ईळितम् । वृत्रहन्तम मिति वृत्रहन् = तमम् । इळाभि : । ईड्यम् । सह : । सोमम् ✱। इन्द्रम् । वयोधस मिति वय : = धसम् ✱। (अनुष्टुभम् । अनुस्तुभ मित्यनु = स्तुभम् )। छन्द : । इन्द्रियम् । पञ्चावि मिति पञ्च = अविम् ✱। गाम् । वय : । दधत् । वेतु । आज्यस्य । होत : । यज ✱।।३।।

| | |
|---|---|
| 30.27.a | होता यक्षत्सुबर्हिषम् पूषण्वन्तममर्त्यꣳ सीदन्तं बर्हिषि प्रियेऽमृतेन्द्रँ वयोधसम् । |
| 30.27.b | बृहती ञ्छन्द इन्द्रियं त्रिवत्सं गाँ वयो दधद्वेत्वाज्यस्य होतर्यज ॥४॥ |
| 30.28.a | होता यक्षद्व्यचस्वती : सुप्रायणा ऋतावृधो द्वारो देवीर्हिरण्ययीर्ब्रह्माणमिन्द्रँ वयोधसम् । |
| 30.28.b | पङ्क्ति ञ्छन्द इहेन्द्रियं तुर्यवाहं गाँ वयो दधद्व्यन्त्वाज्यस्य होतर्यज॥५॥ |
| 30.29.a | होता यक्षत्सुपेशसा सुशिल्पे बृहती उभे नक्तोषासा न दर्शते विश्वमिन्द्रँ वयोधसम् । |
| 30.29.b | त्रिष्टुभं छन्द इहेन्द्रियं पष्ठवाहं गाँ वयो दधद्वीतामाज्यस्य होतर्यज ॥६॥ |
| 30.30.a | होता यक्षत्प्रचेतसा देवानामुत्तमँ य्यशो होतारा दैव्या कवी सयुजेन्द्रँ वयोधसम् । |
| 30.30.b | जगती ञ्छन्द इन्द्रियमनड्वाहं गाँ वयो दधद्वीतामाज्यस्य होतर्यज ॥७॥ |
| 30.31.a | होता यक्षत्पेशस्वतीस्तिस्रो देवीर्हिरण्ययीर्भारतीर्बृहतीर्मही : पतिमिन्द्रँ वयोधसम् । |

होता । यक्षत् । सुबर्हिष मिति सु = बर्हिषम् । पूषण्वन्त मिति पूषण् = वन्तम् । अमर्त्यम् । सीदन्तम् । बर्हिषि । प्रिये । अमृता *। इन्द्रम् । वयोधस मिति वय : = धसम् *। बृहतीम् । छन्द : । इन्द्रियम् । त्रिवत्स मिति त्रि = वत्सम् *। गाम् । वय : । दधत् । वेतु । आज्यस्य । होत : । यज *।।४।। होता । यक्षत् । व्यचस्वती : ।( सुप्रायणा : । सुप्रायना इति सु = प्रायना : )। (ऋतावृध : । ऋतवृध इत्यृत = वृध : )। द्वार : । देवी : । हिरण्ययी : । ब्रह्माणम् *। इन्द्रम् । वयोधस मिति वय : = धसम् *। पङ्क्तिम् । छन्द : । इह । इन्द्रियम् । तुर्यवाह मिति तुर्य = वाहम् *। गाम् । वय : । दधत् । व्यन्तु । आज्यस्य । होत : । यज *।।५।। होता । यक्षत् । सुपेश सेति सु = पेशसा । सुशिल्पे इति सु = शिल्पे । बृहती इति बृहती । उभे इत्युभे । (नक्तोषासा । नक्तोषसेति नक्तोषसा )। न । दर्शते इति दर्शते । विश्वम् *। इन्द्रम् । वयोधस मिति वय : = धसम् *। ( त्रिष्टुभम् । त्रिस्तुभ मिति त्रि = स्तुभम् )। छन्द : । इह । इन्द्रियम् । पष्ठवाह मिति पष्ठ = वाहम् *। गाम् । वय : । दधत् । वीताम् । आज्यस्य । होत : । यज *।।६।। होता । यक्षत् । प्रचेतसेति प्र = चेतसा । देवानाम् । उत्तममित्युत् = तमम् । यश : । होतारा । दैव्या । कवी इति कवी । सयुजेति स = युजा *। इन्द्रम् । वयोधस मिति वय : = धसम् *। जगतीम् । छन्द : । इन्द्रियम् । अनड्वाहम् *। गाम् । वय : । दधत् । वीताम् । आज्यस्य । होत : । यज *।।७।। होता । यक्षत् । पेशस्वती : । तिस्र : । देवी : । हिरण्ययी : । भारती : । बृहती : । मही : । पतिम् *। इन्द्रम् । वयोधस मिति वय : = धसम् *।

| | |
|---|---|
| 30.31.b | विराजं छन्द इहेन्द्रियं धेनुं गां न वयो दधद्वयन्त्वाज्यस्य होतर्यज ॥८॥ |
| 30.32.a | होता यक्षत्सुरेतसं त्वष्टारं पुष्टिवर्धनꣳ रूपाणि बिभ्रतं पृथक् पुष्टिमिन्द्रँ वयोधसम् । |
| 30.32.b | द्विपदं छन्द इन्द्रियमुक्षाणं गां न वयो दधद्वेत्वाज्यस्य होतर्यज ॥९॥ |
| 30.33.a | होता यक्षद्वनस्पतिꣳ शमितारꣳ शतक्रतुꣳ हिरण्यपर्णमुक्थिनꣳ रशनां बिभ्रतँ वशिं भगमिन्द्रँ वयोधसम् । |
| 30.33.b | ककुभं छन्द इहेन्द्रियँ वशाँ वेहतं गाँ वयो दधद्वेत्वाज्यस्य होतर्यज ॥१०॥ |
| 30.34.a | होता यक्षत्स्वाहाकृतीरग्निङ् गृहपतिं पृथग्वरुणं भेषजं कविङ् क्षत्रमिन्द्रँ वयोधसम् । |
| 30.34.b | अतिच्छन्दसं छन्द इन्द्रियं बृहदृषभं गाँ वयो दधद्वयन्त्वाज्यस्य होतर्यज ॥११॥(३) |

| | |
|---|---|
| 30.35.a | देवं बर्हिर्वयोधस न्देवमिन्द्रमवर्धयत् । |
| 30.35.b | गायत्र्या च्छन्दसेन्द्रियं चक्षुरिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥१॥ |
| 30.36.a | देवीर्द्वारो वयोधसꣳ शुचिमिन्द्रमवर्धयन् । |
| 30.36.b | उष्णिहा च्छन्दसेन्द्रियं प्राणमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु यज ॥२॥ |

विराज मिति वि = राजम् । छन्द : । इह । इन्द्रियम् । धेनुम् । गाम् । न ✱। वय : । दधत् । व्यन्तु । आज्यस्य । होत : । यज ✱।।८।। होता । यक्षत् । सुरेतस मिति सु = रेतसम् । त्वष्टारम् । पुष्टिवर्धन मिति पुष्टि = वर्धनम् । रूपाणि । बिभ्रतम् । पृथक् । पुष्टिम् ✱। इन्द्रम् । वयोधस मिति वय : = धसम् ✱। द्विपद मिति द्वि = पदम् । छन्द : । इन्द्रियम् । उक्षाणम् ✱। गाम् । न । वय : । दधत् । वेतु । आज्यस्य । होत : । यज ✱।।९।। होता । यक्षत् । वनस्पतिम् । शमितारम् । शतक्रतु मिति शत = क्रतुम् । हिरण्यपर्ण मिति हिरण्य = पर्णम् । उक्थिनम् । रशनाम् । बिभ्रतम् । वशिम् । भगम् ✱। इन्द्रम् । वयोधस मिति वय : = धसम् ✱। ककुभम् । छन्द : । इह । इन्द्रियम् । वशाम् । वेहतम् ✱। गाम् । वय : । दधत् । वेतु । आज्यस्य । होत : । यज ✱।।१०।। होता । यक्षत् । स्वाहाकृती रिति स्वाहा = कृती : । अग्निम् । गृहपति मिति गृह = पतिम् । पृथक् । वरुणम् । भेषजम् । कविम् । क्षत्रम् ✱। इन्द्रम् । वयोधस मिति वय : = धसम् ✱। अतिच्छन्दस मित्यति = छन्दसम् । छन्द : । इन्द्रियम् । बृहत् । ऋषभम् ✱। गाम् । वय : । दधत् । व्यन्तु । आज्यस्य । होत : । यज ✱।।११।।३।।२५५-१४३=११२।।

देवम् । बर्हि : । वयोधस मिति वय : = धसम् । देवम् । इन्द्रम् । अवर्धयत् ✱। गायत्र्या । छन्दसा । इन्द्रियम् । चक्षु : । इन्द्रे । वय : । दधत् ✱। वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज ✱।।१।। देवी : । द्वार : । वयोधस मिति वय : = धसम् । शुचिम् । इन्द्रम् । अवर्धयन् ✱। उष्णिहा । छन्दसा । इन्द्रियम् । प्राणम् ✱। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने

| | |
|---|---|
| 30.37.a | देवी उषासानक्ता देवमिन्द्रँ वयोधस न्देवी देवमवर्धताम् । |
| 30.37.b | अनुष्टुभा च्छन्दसेन्द्रियं बलमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीताँ य्यज ॥३॥ |
| 30.38.a | देवी जोष्ट्री वसुधिती देवमिन्द्रँ वयोधस न्देवी देवमवर्धताम् । |
| 30.38.b | बृहत्या च्छन्दसेन्द्रिय९ श्रोत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीताँ य्यज ॥४॥ |
| 30.39.a | देवी ऊर्जाहुती दुघे सुदुघे पयसेन्द्रँ वयोधस न्देवी देवमवर्धताम् । |
| 30.39.b | पङ्क्त्या च्छन्दसेन्द्रिय९ शुक्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीताँ य्यज ॥५॥ |
| 30.40.a | देवा दैव्या होतारा देवमिन्द्रँ वयोधस न्देवौ देवमवर्धताम् । |
| 30.40.b | त्रिष्टुभा च्छन्दसेन्द्रियं त्विषिमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीताँ य्यज ॥६॥ |
| 30.41.a | देवीस्तिस्रस्तिस्रो देवीर्वयोधसं पतिमिन्द्रमवर्धयन् । |
| 30.41.b | जगत्या च्छन्दसेन्द्रिय९ शूषमिन्द्रे वयो दधद्वसुवने वसुधेयस्य व्यन्तु यज ॥७॥ |

। वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज *।।२।। देवी इति देवी । ( उषासानक्ता । उषसा नक्तेत्यु षसानक्ता )। देवम् । इन्द्रम् । वयोधस मिति वय : = धसम् । देवी इति देवी । देवम् । अवर्धताम् *। ( अनुष्टुभा । अनुस्तुभेत्यनु = स्तुभा )। छन्दसा । इन्द्रियम् । बलम् *। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वीताम् । यज *।।३।। देवी इति देवी । जोष्ट्री इति जोष्ट्री । वसुधिती इति वसु = धिती । देवम् । इन्द्रम् । वयोधस मिति वय : = धसम् । देवी इति देवी । देवम् । अवर्धताम् *। बृहत्या । छन्दसा । इन्द्रियम् । श्रोत्रम् *। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वीताम् । यज *।।४।। देवी इति देवी । ऊर्जाहुती इत्यूर्ज = आहुती । दुघे इति दुघे । सुदुघे इति सु = दुघे । पयसा । इन्द्रम् । वयोधस मिति वय : = धसम् । देवी इति देवी । देवम् । अवर्धताम् *। पङ्क्त्या । छन्दसा । इन्द्रियम् । शुक्रम् *। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वीताम् । यज *।।५।। देवा : । दैव्या । होतारा । देवम् । इन्द्रम् । वयोधस मिति वय : = धसम् । देवौ । देवम् । अवर्धताम् *। (त्रिष्टुभा । त्रिस्तुभेति त्रि = स्तुभा )। छन्दसा । इन्द्रियम् । त्विषिम् *। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वीताम् । यज *।।६।। देवी : । तिस्र : । तिस्र : । देवी : । वयोधस मिति वय : = धसम् । पतिम् । इन्द्रम् । अवर्धयन् *। जगत्या । छन्दसा । इन्द्रियम् । शूषम् *। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । व्यन्तु । यज *।।७।।

| | |
|---|---|
| 30.42.a | देवो नराशꣳसो देवमिन्द्रँ वयोधस न्देवो देवमवर्धयत् । |
| 30.42.b | विराजा च्छन्दसेन्द्रियꣳ रूपमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥८॥ |
| 30.43.a | देवो वनस्पतिर्देवमिन्द्रँ वयोधस न्देवो देवमवर्धयत् । |
| 30.43.b | द्विपदा च्छन्दसेन्द्रियं भगमिन्द्रे वयोदधद्वसुवने वसुधेयस्यवेतु यज ॥९॥ |
| 30.44.a | देवं बर्हिर्वारितीनां देवमिन्द्रँ वयोधस न्देवं देवमवर्धयत् । |
| 30.44.b | ककुभा च्छन्दसेन्द्रियँ य्यश इन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥१०॥ |
| 30.45.a | देवो अग्नि : स्विष्टकृद्देवमिन्द्रँ वयोधस न्देवो देवमवर्धयत् । |
| 30.45.b | अतिच्छन्दसा च्छन्दसेन्द्रियं क्षत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥११॥ |
| 30.46.a | अग्निमद्य होतारमवृणीतायँ य्यजमान : पचन्पक्ती : पचन्पुरोळाशम् बध्नन्निन्द्राय वयोधसे च्छागम् । |
| 30.46.b | सूपस्था अद्य देवो वनस्पति रभवदिन्द्राय वयोधसे च्छागेन । |
| 30.46.c | अघत्तं मेदस्त : प्रति पचतागृभीदवीवृधत पुरोळाशेन । |
| 30.46.d | त्वामद्य ऋषे ॥१२॥(४) |

होता यक्षदेकादश ॥११॥ देवं बर्हिर्द्वादश ॥१२॥ होतायक्षदेकादश ॥११॥ देवं बर्हिर्द्वादश ॥१२॥ चतुरनुवाकेषु वट्चत्वरिंशत् ॥४६॥

देव : । नराशꣳस : । देवम् । इन्द्रम् । वयोधस मिति वय : = धसम् । देव : । देवम् । अवर्धयत् ✱। विराजेति वि = राजा । छन्दसा । इन्द्रियम् । रूपम् ✱। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज ✱।।८।। देव : । वनस्पति : । देवम् । इन्द्रम् । वयोधस मिति वय : = धसम् । देव : । देवम् । अवर्धयत् ✱। द्विपदेति द्वि = पदा । छन्दसा । इन्द्रियम् । भगम् ✱। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज ✱।।९।। देवम् । बर्हि : । वारितीनाम् । देवम् । इन्द्रम् । वयोधस मिति वय : = धसम् । देवम् । देवम् । अवर्धयत् ✱। ककुभा । छन्दसा । इन्द्रियम् । यश : ✱। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज ✱।।१०।। देव : । अग्नि : । स्विष्टकृदिति स्विष्ट = कृत् । देवम् । इन्द्रम् । वयोधस मिति वय : = धसम् । देव : । देवम् । अवर्धयत् ✱। अतिच्छन्द सेत्यति = छन्दसा । छन्दसा । इन्द्रियम् । क्षत्रम् ✱। इन्द्रे । वय : । दधत् । वसुवन इति वसु = वने । वसुधेयस्येति वसु = धेयस्य । वेतु । यज ✱।।११।। अग्निम् । अद्य । होतारम् । अवृणीत । अयम् । यजमान : । पचन् । पक्ती : । पचन् । पुरोळाशम् । बध्नन् । इन्द्राय । वयोधस इति वय : = धसे । छागम् ✱। सूपस्था इति सु = उपस्था : । अद्य । देव : । वनस्पति : । अभवत् । इन्द्राय । वयोधस इति वय : = धसे । छागेन ✱। अघत् । तम् । मेदस्त : । प्रति । पचत । अगृभीत् । अवीवृधत । पुरोळाशेन ✱। त्वाम् । अद्य । ऋषे ।।१२।।४।।२४४-२०३=४१।। **आहत्य पद संख्या ।।९६८-५४४=४२४।। दशके पदानि ।।९८४०-२०१४=७८२६।।**

।। इति शुक्लयजु : काण्वसंहितायां त्रिंशतितमोऽध्याय ।।३०।।

# ।। इतित्रिंशोऽध्याय : ।।

# ।। इतितृतीय दशक : ।।

| Adhyaya | 30 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 209 | 83 | 126 |
| 2 | 260 | 115 | 145 |
| 3 | 255 | 143 | 112 |
| 4 | 244 | 203 | 41 |
| **Total** | **968** | **544** | **424** |

**Dasaka Pada Computation**

| Adhyaya No. | Total Padas | Galitha Padas | Suddha Padas |
|---|---|---|---|
| 21 | 1760 | 207 | 1553 |
| 22 | 1113 | 107 | 1006 |
| 23 | 1449 | 348 | 1101 |
| 24 | 853 | 349 | 504 |
| 25 | 1096 | 196 | 900 |
| 26 | 623 | 3 | 620 |
| 27 | 884 | 62 | 822 |
| 28 | 308 | 93 | 215 |
| 29 | 786 | 105 | 681 |
| 30 | 968 | 544 | 424 |
| **Total** | **9840** | **2014** | **7826** |

# ।। अथ चतुर्थो दशक : ।।

## ।। अथैकत्रिंशोऽध्याय : ।।

| | |
|---|---|
| 31.1.a | समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमान : । |
| 31.1.b | वाजी वहन्वाजिन ञ्जातवेदो देवानाँ वक्षि प्रियमा सधस्थम् ।।१।। |
| 31.2.a | घृतेनाञ्जन्त्सं पथो देवयानान्प्रजानन्वाज्यप्येतु देवान् । |
| 31.2.b | अनुत्वा सप्ते प्रदिश : सचन्ताꣳ स्वधामस्मै यजमानाय धेहि ।।२।। |
| 31.3.a | ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते । |
| 31.3.b | अग्निष्ट्वा देवैर्वसुभि : सजोषा : प्रीतँ वह्निँ वहतु जातवेदा : ।।३।। |
| 31.4.a | स्तीर्णं बर्हि : सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् । |
| 31.4.b | देवेभिर्युक्तमदिति : सजोषा : स्योनं कृण्वाना सुविते दधातु ।।४।। |
| 31.5.a | एता उ व : सुभगा विश्वरूपा वि पक्षोभि : श्रयमाणा उदातै : । |
| 31.5.b | ऋष्वा : सती : कवष : शुम्भमाना द्वारो देवी : सुप्रायणा भवन्तु ।।५।। |
| 31.6.a | अन्तरा मित्रावरुणा चरन्ती मुखँ य्यज्ञानामभि सँविदाने । |
| 31.6.b | उषासा वाꣳ सुहिरण्ये सुशिल्पे ऋतस्य योना इह सादयामि ।।६।। |

# ।।अथ चतुर्थदशक :।। अथ एकत्रिंशोऽध्याय :।।

ॐ समिद्ध इति सम् = इद्ध :। अञ्जन्। कृदरम्। मतीनाम्। घृतम्। अग्ने। मधुम दिति मधु = मत्। पिन्वमान : ✱। वाजी। वहन्। वाजिनम्। जातवेद इति जात = वेदः। देवानाम्। वक्षि। प्रियम्। आ। सधस्थ मिति सध = स्थम् ✱।।१।। घृतेन। अञ्जन्। सम्। पथ :। देवयानानिति देव = यानान्। प्रजानन्निति प्र = जानन्। वाजी। अपि। एतु। देवान् ✱। अनु। त्वा। सप्ते। प्रदिश इति प्र = दिश :। सचन्ताम्। स्वधाम्। अस्मै। यजमानाय। धेहि ✱।।२।। ईड्य :। च। असि। वन्द्य :। च। वाजिन्। आशु :। च। असि। मेध्य :। च। सप्ते ✱। अग्नि :। त्वा। देवै :। वसुभि रिति वसु = भि :। सजोषा इति स = जोषा :। प्रीतम्। वन्हिम्। वहतु। जातवेदा इति जात = वेदा : ✱।।३।। स्तीर्णम्। बर्हि :।( सुष्टरीमा। सुस्तरीमेति सु = स्तरीमा )। जुषाणा। उरु। पृथु। प्रथमानम्। पृथिव्याम् ✱। देवेभि :। युक्तम्। अदिति :। सजोषा इति स = जोषा :। स्योनम्। कृण्वाना। सुविते। दधातु ✱।।४।। एता :। ऊँ इत्यूँ। व :। सुभगा इति सु = भगा :। विश्वरूपा इति विश्व = रूपा :। वि। पक्षोभि रिति पक्ष : = भि :। श्रयमाणा :। उत्। आतै : ✱। ऋष्वा :। सती :। कवष :। शुंभमाना :। द्वार :। देवी :।( सुप्रायणा :। सुप्रायना इति सु = प्रायना : )। भवन्तु ✱।।५।। अन्तरा। मित्रावरुणा। चरन्ती इति चरन्ती। मुखम्। यज्ञानाम्। अभि। सँविदाने इति सं = विदाने ✱। (उषासा। उषसेत्युषसा )। वाम्। सुहिरण्ये इति सु = हिरण्ये। सुशिल्पे इति सु = शिल्पे। ऋतस्य। योनौ। इह। सादयामि ✱।।६।।

| | |
|---|---|
| 31.7.a | प्रथमा वा२ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा । |
| 31.7.b | अपिप्रयं चोदना वां मिमाना होतारा ज्योति : प्रदिशा दिशन्ता ।।७।। |
| 31.8.a | आदित्यैर्नो भारती वष्टु यज्ञ२ सरस्वती सह रुद्रैर्न आवीत् । |
| 31.8.b | इळोपहूता वसुभि : सजोषा यज्ञं नो देवीरमृतेषु धत्त ।।८।। |
| 31.9.a | त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्व : । |
| 31.9.b | त्वष्टेदँ विश्वं भुवनं जजान बहो : कर्तारमिह यक्षि होत : ।।९।। |
| 31.10.a | अश्वो घृतेन त्मन्या समक्त उप देवाँ (२)- ऋतुश : पाथ एतु । |
| 31.10.b | वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ।।१०।। |
| 31.11.a | प्रजापतेस्तपसा वावृधान : सद्यो जातो दधिषे यज्ञमग्रे । |
| 31.11.b | स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवा : ।।११।।(१) |

| | |
|---|---|
| 31.12.a | केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । |
| 31.12.b | समुषद्भिरजायथा : ।।१।। |
| 31.13.a | जीमूतस्येव भवति प्रतीकँ य्यद्वर्मी याति समदामुपस्थे । |
| 31.13.b | अनाविद्धया तन्वा जय त्व२ स त्वा वर्मणो महिमा पिपर्तु ।।२।। |

प्रथमा । वाम् । सरथिनेति स = रथिना । सुवर्णेति सु = वर्णा । देवौ । पश्यन्तौ । भुवनानि । विश्वा *। अपिप्रयम् । चोदना । वाम् । मिमाना । होतारा । ज्योति : । प्रदिशेति प्र = दिशा । दिशन्ता *।।७।। आदित्यै : । न : । भारती । वष्टु । यज्ञम् । सरस्वती । सह । रुद्रै : । न : । आवीत् *। इळा । उपहूतेत्युप = हूता । वसुभि रिति वसु = भि : । सजोषा इति स = जोषा : । यज्ञम् । न : । देवी : । अमृतेषु । धत्त *।।८।। त्वष्टा । वीरम् । देवकाम मिति देव = कामम् । जजान । त्वष्टु : । अर्वा । जायते । आशु : । अश्व : *। त्वष्टा । इदम् । विश्वम् । भुवनम् । जजान । बहो : । कर्तारम् । इह । यक्षि । होत रिति होत : *।।९।। अश्व : । घृतेन । त्मन्या । समक्त इति सं = अक्त : । उप । देवान् । ऋतुश इत्यृतु = श : । पाथ : । एतु *। वनस्पति : । देवलोकमिति देव = लोकम् । प्रजानन्निति प्र = जानन् । अग्निना । हव्या । स्वदितानि । वक्षत् *।।१०।। प्रजापते रिति प्रजा = पते : । तपसा ।( वावृधान : । ववृधान इति ववृधान : )। सद्य : । जात : । दधिषे । यज्ञम् । अग्ने *। स्वाहाकृते नेति स्वाहा = कृतेन । हविषा । पुरोगा इति पुर : = गा : । याहि । साध्या । हवि : । अदन्तु । देवा : *।।११।।१।।१९२-०=१९२।।

केतुम् । कृण्वन् । अकेतवे । पेश : । मर्या : । अपेशसे *। सम् । उषद्भि रित्युषत् = भि : । अजायथा : *।।१।। जीमूतस्येवेति जीमूतस्य = इव । भवति । प्रतीकम् । यत् । वर्मी । याति । समदा मिति स = मदाम् । उपस्थ इत्युप = स्थे *। अनाविद्धया । तन्वा । जय । त्वम् । स : । त्वा । वर्मण : । महिमा । पिपर्तु *।।२।।

| | |
|---|---|
| 31.14.a | धन्वना गा धन्वनाऽऽजिञ् जयेम धन्वना तीव्रा : समदो जयेम । |
| 31.14.b | धनु : शत्रोरपकामं कृणोति धन्वना सर्वा : प्रदिशो जयेम ।।३।। |
| 31.15.a | ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे । |
| 31.15.b | अप शत्रून्विध्यताꣳ सँविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ।।४।। |
| 31.16.a | वक्ष्यन्तीवेदा गनीगन्ति कर्णम् प्रियꣳ सखायं परिषस्वजाना । |
| 31.16.b | योषेव शिङ्क्ते वितताऽधि धन्व ज्ज्या इयꣳ समने पारयन्ती ।।५।। |
| 31.17.a | अहिरिव भोगै : पर्येति बाहुं ज्याया हेतिम् परिबाधमान : । |
| 31.17.b | हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳसं परि पातु विश्वत : ।।६।। |
| 31.18.a | बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनाऽवगत्य । |
| 31.18.b | इषुधि : सङ्का : पृतनाश्च सर्वा : पृष्ठे निनद्धो जयति प्रसूत : ।।७।। |
| 31.19.a | सुपर्णँ वस्ते मृगो अस्या दन्तो गोभि : सन्नद्धा पतति प्रसूता । |
| 31.19.b | यत्रा नर : सं च वि च द्रवन्ति तत्रास्मभ्यमिषव : शर्म यꣳसन् ।।८।। |
| 31.20.a | वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरण : सुवीर : । |

धन्वना । गा : । धन्वना । आजिम् । जयेम । धन्वना । तीव्रा : । समद इति
स = मद : । जयेम ✱। धनु : । शत्रो : । अपकाम मित्यप = कामम् । कृणोति
। धन्वना । सर्वा : । प्रदिश इति प्र = दिश : । जयेम ✱।।३।। ते इति ते ।
आचरन्ती इत्या = चरन्ती । समनेवेति समना = इव । योषा । मातेवेति माता =
इव । पुत्रम् । बिभृताम् । उपस्थ इत्युप = स्थे ✱। अप । शत्रून् । विध्यताम् ।
सँविदाने इति सं = विदाने । आर्त्नी इत्यार्त्नी । इमे इतीमे ।( विष्फुरन्ती ।
विस्फुरन्ती इति वि = स्फुरन्ती )। अमित्रान् ✱।।४।। वक्ष्यन्ती वेति वक्ष्यन्ती =
इव । इत् । आ । गनीगन्ति । कर्णम् । प्रियम् । सखायम् ।( परिषस्वजाना ।
परिसस्वजानेति परि = सस्वजाना )✱। योषेवेति योषा = इव । शिङ्क्ते ।
वितततेति वि = तता । अधि । धन्वन् । ज्या । इयम् । समने । पारयन्ती
✱।।५।। अहिरि वेत्यहि : = इव । भोगै : । परि । एति । बाहुम् । ज्याया : ।
हेतिम् । परिबाधमान इति परि = बाधमान : ✱। हस्तघ्न इति हस्त = घ्न : ।
विश्वा । वयुनानि । विद्वान् । पुमान् । पुमाꣳसम् । परि । पातु । विश्वत :
✱।।६।। बह्वीनाम् । पिता । बहु : । अस्य । पुत्र : । चिश्चा । कृणोति ।
समना । अवगत्येत्यव = गत्य ✱। इषुधिरितीषु = धि : । सङ्का : । पृतना : ।
च । सर्वा : । पृष्ठे । निनद्ध इति नि = नद्ध : । जयति । प्रसूत इति प्र = सूत :
✱।।७।। सुपर्णमिति सु = पर्णम् । वस्ते । मृग : । अस्या : । दन्त : । गोभि :
। सन्नद्धेति सं = नद्धा । पतति । प्रसूतेति प्र = सूता ✱। यत्र । नर : । सम् ।
च । वि । च । द्रवन्ति । तत्र । अस्मभ्यम् । इषव : । शर्म । यꣳसन् ✱।।८।।
वनस्पते । वीड्वङ्ग इति वीळु = अङ्ग : । हि । भूया : । अस्मत्सखे त्यस्मत् =

| | |
|---|---|
| 31.20.b | गोभि : सन्नद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ।।९।। |
| 31.21.a | रथे तिष्ठन्नयति वाजिन : पुरो यत्रयत्र कामयते सुषारथि : । |
| 31.21.b | अभीशूनां महिमानम् पनायत मन : पश्चादनु यच्छन्ति रश्मय : ।।१०।। |
| 31.22.a | आ जङ्घन्ति सान्वेषां जघनाँ (२)- उप जिघ्नते । |
| 31.22.b | अश्वाजनि प्रचेतसोश्वान्त्समत्सु चोदय ।।११।। |
| 31.23.a | उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुताँ विष्ठितं जगत् । |
| 31.23.b | स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ।।१२।।(२) |

| | |
|---|---|
| 31.24.a | यदक्रन्द : प्रथम जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । |
| 31.24.b | श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ।।१।। |
| 31.25.a | यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् । |
| 31.25.b | गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ।।२।। |
| 31.26.a | असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन । |
| 31.26.b | असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ।।३।। |

सखा । प्रतरण इति प्र = तरण : । सुवीर इति सु = वीर : ✱। गोभि : । सन्नद्ध इति सं = नद्ध : । असि । वीळयस्व । आस्थातेत्या = स्थाता । ते । जयतु । जेत्वानि ✱।।९।। रथे । तिष्ठन् । नयति । वाजिन : । पुर : । यत्रयत्रेति यत्र = यत्र । कामयते । (सुषारथि : । सुसारथि रिति सु = सारथि : )✱। अभीशूनाम् । महिमानम् । पनायत । मन : । पश्चात् । अनु । यच्छन्ति । रश्मय : ✱।।१०।। आ । जङ्घन्ति । सानु । एषाम् । जघनान् । उप । जिघ्नते ✱। अश्वाजनीत्यश्व = अजनि । प्रचेतस इति प्र = चेतस : । अश्वान् । समत्स्विति समत् = सु । चोदय ✱।।११।। उप । श्वासय । पृथिवीम् । उत । द्याम् । पुरुत्रेति पुरु = त्रा । ते । मनुताम् । ( विष्ठितम् । विस्थित मिति वि = स्थितम् )। जगत् ✱। स : । दुन्दुभे । सजू रिति स = जू : । इन्द्रेण । देवै : । दूरात् । दवीय : । अप । सेध । शत्रून् ✱।।१२।।२।।१९५-०=१९५।।

यत् । अक्रन्द : । प्रथमम् । जायमान : । उद्यन्नित्युत् = यन् । समुद्रात् । उत । वा । पुरीषात् ✱। श्येनस्य । पक्षा । हरिणस्य । बाहू इति बाहू । उपस्तुत्य मित्युप = स्तुत्यम् । महि । जातम् । ते । अर्वन् ✱।।१।। यमेन । दत्तम् । त्रित : । एनम् । (आयुनक् । अयुनगित्य युनक् )। इन्द्र : । एनम् । प्रथम : । अधि । अतिष्ठत् ✱। गन्धर्व : । अस्य । रशनाम् । अगृभ्णात् । सूरात् । अश्वम् । वसव : । नि : । अतष्ट ✱।।२।। असि । यम : । असि । आदित्य : । अर्वन् । असि । त्रित : । गुह्येन । व्रतेन ✱। असि । सोमेन । समया । विपृक्त इति वि = पृक्त : । आहु : । ते । त्रीणि । दिवि । बन्धनानि ✱।।३।।

| | |
|---|---|
| 31.27.a | त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्त : समुद्रे । |
| 31.27.b | उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहु : परमं जनित्रम् ।।४।। |
| 31.28.a | इमा ते वाजिन्नवमार्जनानीमा शफानाँ सनितुर्निधाना । |
| 31.28.b | अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपा : ।।५।। |
| 31.29.a | आत्मान न्ते मनसाऽऽरादजानामवो दिवा पतयन्तं पतङ्गम् । |
| 31.29.b | शिरो अपश्यं पथिभि : सुगेभिररेणुभिर्जेहमानं पतत्रि ।।६।। |
| 31.30.a | अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गो : । |
| 31.30.b | यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीग : ।।७।। |
| 31.31.a | अनुत्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भग : कनीनाम् । |
| 31.31.b | अनु व्रतासस्तव सख्यमीयुरनु देवा ममिरे वीर्य न्ते ।।८।। |
| 31.32.a | हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् । |
| 31.32.b | देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् ।।९।। |
| 31.33.a | ईर्मान्तास : सिलिकमध्यमास : सँ शूरणासो दिव्यासो अत्या : । |
| 31.33.b | हँसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वा : ।।१०।। |

त्रीणि । ते । आहु : । दिवि । बन्धनानि । त्रीणि । अप्स्वित्यप् = सु । त्रीणि । अन्तरित्यन्त : । समुद्रे ✱। उतेवेत्युत = इव । मे । वरुण : । छन्त्सि । अर्वन् । यत्र । ते । आहु : । परमम् । जनित्रम् ✱।।४।। इमा । ते । वाजिन् । अवमार्जना नीत्यव = मार्जनानि । इमा । शफानाम् । सनितु : । निधा नेति नि = धाना ✱। अत्र । ते । भद्रा : । रशना : । अपश्यम् । ऋतस्य । या : । अभिरक्षन्ती त्यभि = रक्षन्ति । गोपा : ✱।।५।। आत्मानम् । ते । मनसा । आरात् । अजानाम् । अव : । दिवा । पतयन्तम् । पतङ्गम् ✱। शिर : । अपश्यम् । पथिभि रिति पथि = भि : । सुगेभि रिति सु = गेभि : । अरेणुभि रित्य रेणु = भि : । जेहमानम् । पतत्रि ✱।।६।। अत्र । ते । रूपम् । उत्तममित्युत् = तमम् । अपश्यम् । जिगीषमाणम् । इष : । आ । पदे । गो : ✱। यदा । ते । मर्त : । अनु । भोगम् । आनट् । आत् । इत् । ग्रसिष्ठ : । ओषधी : । अजीगरित्य जीग : ✱।।७।। अनु । त्वा । रथ : । अनु । मर्य : । अर्वन् । अनु । गाव : । अनु । भग : । कनीनाम् ✱। अनु । व्रातास : । तव । सख्यम् । ईयु : । अनु । देवा : । ममिरे । वीर्यम् । ते ✱।।८।। हिरण्यशृङ्ग इति हिरण्य = शृङ्ग : । अय : । अस्य । पादा : । मनोजवा इति मन : = जवा : । अवर : । इन्द्र : । आसीत् ✱। देवा : । इत् । अस्य । हविरद्य मिति हवि : = अद्यम् । आयन् । य : । अर्वन्तम् । प्रथम : । अध्यतिष्ठ दित्यति = अतिष्ठत् ✱।।९।। ईर्मान्तास इतीर्म = अन्तास : । सिलिकमध्यमास इति सिलिक = मध्यमास : । सम् । शूरणास : । दिव्यास : । अत्या : ✱। हꣳसा इवेति हꣳसा : = इव । श्रेणिश इति श्रेणि = श : । यतन्ते । यत् । आक्षिषु : । दिव्यम् ।

| | |
|---|---|
| 31.34.a | तव शरीरं पतयिष्ण्वर्वन्तव चित्तँ वात इव ध्रजीमान् । |
| 31.34.b | तव श्रृङ्गाणि विष्ठिता पुरुत्राऽरण्येषु जर्भुराणा चरन्ति ।।११।। |
| 31.35.a | उपप्रागाच्छसनँ वाज्यर्वा देवद्रीचा मनसा दीध्यान : । |
| 31.35.b | अज : पुरो नीयते नाभिरस्यानु पश्चात्कवयो यन्ति रेभा : ।।१२।। |
| 31.36.a | उप प्रागात्परमँ य्यत्सधस्थमर्वाँ (२) - अच्छा पितरम् मातरञ्च । |
| 31.36.b | अद्या देवाञ्जुष्टतमो हि गम्या अथा शास्ते दाशुषे वार्याणि ।।१३।।(३) |

| | |
|---|---|
| 31.37.a | समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेद : । |
| 31.37.b | आ च वह मित्रमहश्चिकित्वान्त्वं दूत : कविरसि प्रचेता : ।।१।। |
| 31.38.a | तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व । |
| 31.38.b | मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं न : ।।२।। |
| 31.39.a | नराशꣳसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञै : । |
| 31.39.b | ये सुक्रतव : शुचयो धियन्धा : स्वदन्ति देवा उभयानि हव्या ।।३।। |
| 31.40.a | आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभि : सजोषा : । |

अज्मम् । अश्वा : *॥१०॥ तव । शरीरम् । पतयिष्णु । अर्वन् । तव । चित्तम् । वात इवेति वात : = इव । ध्रजीमान् *। तव । शृङ्गाणि ।( विष्ठिता । विस्थितेति वि = स्थिता )। पुरुत्रेति पुरु = त्रा । अरण्येषु । जर्भुराणा । चरन्ति *॥११॥ उप । प्र । अगात् । शसनम् । वाजी । अर्वा । देवद्रीचा । मनसा । दीध्यान : *। अज : । पुर : । नीयते । नाभि : । अस्य । अनु । पश्चात् । कवय : । यन्ति । रेभा : *॥१२॥ उप । प्र । अगात् परमम् । यत् । सधस्थमिति सध = स्थम् । अर्वान् । अच्छ । पितरम् । मातरम् । च *। अद्य । देवान् । जुष्टतम इति जुष्ट = तम : । हि । गम्या : । अथ । आ । शास्ते । दाशुषे । वार्याणि *॥१३॥३॥२३६-३=२३३॥

समिद्ध इति सं = इद्ध : । अद्य । मनुष : । दुरोणे । देव : । देवान् । यजसि । जातवेद इति जात = वेद : *। आ । च । वह । मित्रमह इति मित्र = मह : । चिकित्वान् । त्वम् । दूत : । कवि : । असि । प्रचेता इति प्र = चेता : *॥१॥ तनून पादिति तनू = नपात् । पथ : । ऋतस्य । यानान् । मध्वा । समञ्जन्निति सं = अञ्जन् । स्वदय । सुजिह्वेति सु = जिह्व *। मन्मानि । धीभि : । उत । यज्ञम् । ऋन्धन् । देवत्रेति देव = त्रा । च । कृणुहि । अध्वरम् । न : *॥२॥ नराशꣳसस्य । महिमानम् । एषाम् । उप । स्तोषाम । यजतस्य । यज्ञै : *। ये । सुक्रतव इति सु = क्रतव : । शुचय : । धियन्धा इति धियं = धा : । स्वदन्ति । देवा : । उभयानि । हव्या *॥३॥ आजुह्वान इत्या = जुह्वान : । ईड्य : । वन्द्य : । च । आ । याहि । अग्ने । वसुभि रिति वसु = भि : । सजोषा इति स = जोषा : *।

| | |
|---|---|
| 31.40.b | त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ।।४।। |
| 31.41.a | प्राचीनम् बर्हि : प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् । |
| 31.41.b | व्यु प्रथते वितरँ वरीयो देवेभ्यो अदितये स्योनम् ।।५।। |
| 31.42.a | व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनय : शुम्भमाना : । |
| 31.42.b | देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणा : ।।६।। |
| 31.43.a | आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ । |
| 31.43.b | दिव्ये योषणे बृहती सुरुक्मे अधि श्रियँ शुक्रपिशं दधाने ।।७।। |
| 31.44.a | दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै । |
| 31.44.b | प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योति : प्रदिशा दिशन्ता ।।८।। |
| 31.45.a | आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती । |
| 31.45.b | तिस्रो देवीर्बर्हिरिदँ स्योनँ सरस्वती स्वपस : सदन्तु ।।९।। |
| 31.46.a | य इमे द्यावापृथिवी जनित्री रूपैरपिँशद्भुवनानि विश्वा । |
| 31.46.b | तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ।।१०।। |

त्वम् । देवानाम् । असि । यह्व । होता । स: । एनान् । यक्षि । इषित: । यजीयान् *।।४।। प्राचीनम् । बर्हि: । प्रदिशेति प्र = दिशा । पृथिव्या: । वस्तो: । अस्या: । वृज्यते । अग्रे । अन्हाम् *। वि । ऊँ इत्यूँ । प्रथते । वितरमिति वि = तरम् । वरीय: । देवेभ्य: । अदितये । स्योनम् *।।५।। व्यचस्वती: । उर्विया । वि । श्रयन्ताम् । पतिभ्य इति पति = भ्य: । न । जनय: । शुंभमाना: *। देवी: । द्वार: । बृहती: । विश्वमिन्वा इति विश्वं = इन्वा: । देवेभ्य: । भवत ।( सुप्रायणा: । सुप्रायना इति सु = प्रायना :) *।।६।। आ ।( सुष्वयन्ती । सुस्वयन्ती इति सु = स्वयन्ती )। यजते इति यजते । उपाके इत्युपाके । (उषासानक्ता । उषसा नक्तेत्युषसानक्ता )। सदताम् । नि । योनौ *। दिव्ये इति दिव्ये । योषणे इति योषणे । बृहती इति बृहती । सुरुक्मे इति सु = रुक्मे । अधि । श्रियम् । शुक्रपिश मिति शुक्र = पिशम् । दधाने इति दधाने *।।७।। दैव्या । होतारा । प्रथमा । सुवाचेति सु = वाचा । मिमाना । यज्ञम् । मनुष: । यजध्यै *। प्रचोदयन्तेति प्र = चोदयन्ता । विदथेषु । कारू इति कारू । प्राचीनम् । ज्योति: । प्रदिशेति प्र = दिशा । दिशन्ता *।।८।। आ । न: । यज्ञम् । भारती । तूयम् । एतु । इळा । मनुष्वत् । इह । चेतयन्ती *। तिस्र: । देवी: । बर्हि: । आ । इदम् । स्योनम् । सरस्वती । स्वपस इति सु = अपस: । सदन्तु *।।९।। य: । इमे इतीमे । द्यावापृथिवी इति द्यावा पृथिवी । जनित्री इति जनित्री । रूपै: । अपिंशत् । भुवनानि । विश्वा *। तम् । अद्य । होत: । इषित: । यजीयान् । देवम् । त्वष्टारम् । इह । यक्षि । विद्वान् *।।१०।।

| | |
|---|---|
| 31.47.a | उपावसृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवी॑ᳲषि । |
| 31.47.b | वनस्पति : शमिता देवो अग्नि : स्वदन्तु हव्यं मधुना घृतेन ॥११॥ |
| 31.48.a | सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगा : । |
| 31.48.b | अस्य होतु : प्रदिश्यृतस्य वाचि स्वाहाकृतᳲहविरदन्तु देवाः॥१२॥(४) |

| | |
|---|---|
| 31.49.a | अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्य : सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविᳲशाभ्याँ वैराजाभ्याम् । |
| 31.49.b | पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरु : सवित्र औष्णिहाय त्रयस्त्रिᳲशाय रैवताय द्वादशकपाल : प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपाल : ॥१॥(५) |

उपावसृजेत्युप = अवसृज । त्मन्या । समञ्जन्निति सं = अञ्जन् । देवानाम् । पाथ : । ऋतुथेत्यृतु = था । हवीꣳषि *। वनस्पति : । शमिता । देव : । अग्नि : । स्वदन्तु । हव्यम् । मधुना । घृतेन *॥११॥ सद्य : । जात : । वि । अमिमीत । यज्ञम् । अग्नि : । देवानाम् । अभवत् । पुरोगा इति पुर : = गा : *। अस्य । होतु : । प्रदिशीति प्र = दिशि । ऋतस्य । वाचि । स्वाहाकृत मिति स्वाहा = कृतम् । हवि : । अदन्तु । देवा : *॥१२॥४॥२०३-०=२०३॥

अग्नये । गायत्राय । त्रिवृत इति त्रि = वृते । राथन्तरायेति राथम् = तराय । अष्टाकपाल इत्यष्टा = कपाल : । इन्द्राय ।( त्रैष्टुभाय । त्रैस्तुभायेति त्रैस्तुभाय )। पञ्चदशायेति पञ्च = दशाय । बार्हताय । एकादशकपाल इत्येकादश = कपाल : । विश्वेभ्य : । देवेभ्य : । जागतेभ्य : । सप्तदशेभ्य इति सप्त = दशेभ्य : । वैरूपेभ्य : । द्वादशकपाल इति द्वादश = कपाल : । मित्रावरुणाभ्याम् ।( आनुष्टुभाभ्याम् । आनुस्तुभाभ्या मित्यानु = स्तुभाभ्याम् )। एकविꣳशाभ्या मित्येक = विꣳशाभ्याम् । वैराजाभ्याम् । पयस्या । बृहस्पतये । पाङ्क्ताय ।( त्रिणवाय । त्रिनवायेति त्रि = नवाय )। शाक्कराय । चरु : । सवित्रे । औष्णिहाय । त्रयस्त्रिꣳशायेति त्रय : = त्रिꣳशाय । रैवताय । द्वादशकपाल इति द्वादश = कपाल : । प्राजापत्य इति प्राजा = पत्य : । चरु : । अदित्यै । विष्णुपत्न्या इति विष्णु = पत्न्यै । चरु : । अग्नये । वैश्वानराय । द्वादशकपाल इति द्वादश = कपाल : । अनुमत्या इत्यनु = मत्यै । अष्टाकपाल इत्यष्टा = कपाल : *॥१॥५॥४१-०=४१॥

| | |
|---|---|
| 31.50.a | आग्नेय : कृष्णग्रीव : सारस्वती मेषी बभ्रु : सौम्य : पौष्ण : श्याम : शितिपृष्ठो बार्हस्पत्य : शिल्पो वैश्वदेव : । |
| 31.50.b | ऐन्द्रोऽरुणो मारुत : कल्माष ऐन्द्राग्न : सꣳहितोऽधोराम : सावित्रो वारुण : कृष्ण एकशितिपात्पेत्व : ॥१॥(६) |

| | |
|---|---|
| 31.51.a | अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ । |
| 31.51.b | मारुत : कल्माष आग्नेय : कृष्णोऽज : सारस्वती मेषी वारुण : पेत्व : ॥१॥(७) |

समिद्धो अञ्जन्नेकादश ॥११॥ केतुं कृण्वन्द्वादश ॥१२॥ यदक्रन्दस्त्रयोदश ॥१३॥ समिद्धो अद्य द्वादश ॥१२॥ अग्नये गायत्रायैका ॥१॥ आग्नेय : कृष्णग्रीव एका ॥१॥ अग्नयेऽनीकवत इत्येका ॥१॥ सप्तानुवाकेष्वेकपञ्चाशत् ॥५१॥

## ॥ इति शुक्लयजु : काण्वसंहितायामेकत्रिंशतितमोऽध्याय : ॥

आग्नेय : । कृष्णग्रीव इति कृष्ण = ग्रीव : । सारस्वती । मेषी । बभ्रु : । सौम्य : । पौष्ण : । श्याम : । शितिपृष्ठ इति शिति = पृष्ठ : । बार्हस्पत्य : । शिल्प : । वैश्विदेव इति वैश्व = देव : । ऐन्द्र : । अरुण : । मारुत : । कल्माष : । ऐन्द्राग्न : । सꣳहित इति सं = हित : । अधोराम इत्यध : = राम : । सावित्र : । वारुण : । कृष्ण : । एकशितिपा दित्येक = शितिपात् । पेत्व : ✱।।१।।६।।२४-०=२४।।

अग्नये । अनीकवत इत्यनीक = वते । रोहिताञ्जि रिति रोहित = अञ्जि : । अनड्वान् । अधोरामा इत्यध : = रामौ । सावित्रौ । पौष्णौ । रजतनाभी इति रजत = नाभी । वैश्वदेवा इति वैश्व = देवौ । पिशङ्गौ । तूपरौ । मारुत : । कल्माष : । आग्नेय : । कृष्ण : । अज : । सारस्वती । मेषी । वारुण : । पेत्व : ✱।।१।।७।।२०-०=२०।। आहत्य पद संख्या ।।९११-३=९०८।।

## इति एकत्रिंशोऽध्याय :

## ।। इति एकत्रिंशोऽध्याय : ।।

| Adhyaya | 31 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 192 | 0 | 192 |
| 2 | 195 | 0 | 195 |
| 3 | 236 | 3 | 233 |
| 4 | 203 | 0 | 203 |
| 5 | 41 | 0 | 41 |
| 6 | 24 | 0 | 24 |
| 7 | 20 | 0 | 20 |
| Total | 911 | 3 | 908 |

# ।। अथ द्वात्रिंशोऽध्याय : ।।

| | |
|---|---|
| 32.1.a | अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नय : पावका : । |
| 32.1.b | श्वितीचय : श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमा : ।।१।। |
| 32.2.a | हरयो धूमकेतवो वातजूता उप द्यवि । |
| 32.2.b | यतन्ते वृथगग्नय : ।।२।। |
| 32.3.a | यजा नो मित्रावरुणा यजा देवाँ (२) - ऋतं बृहत् । |
| 32.3.b | अग्ने यक्षि स्वं दमम् ।।३।। |
| 32.4.a | युक्ष्वा हि देवहूतमाँ (२) - अश्वाँ (२) - अग्ने रथीरिव । |
| 32.4.b | नि होता पूर्व्य : सद : ।।४।। |
| 32.5.a | द्वे विरूपे चरत : स्वर्थे अन्यान्या वत्समुप धापयेते । |
| 32.5.b | हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्या न्ददृशे सुवर्चा : ।।५।। |
| 32.6.a | अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्य : । |
| 32.6.b | यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रँ विभ्वँ विशेविशे ।।६।। |
| 32.7.a | त्रीणि शता त्री सहस्राण्यग्नि न्त्रिꣳशच्च देवा नव चासपर्यन् । |
| 32.7.b | औक्षन्घृतैरस्तृणन् बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ।।७।। |
| 32.8.a | मूर्धानन् दिवो अरतिम् पृथिव्या वैश्वानरमृत आ जातमग्निम् । |
| 32.8.b | कविꣳ सम्राजमतिथि ञ्जनानामासन्ना पात्र ञ्जनयन्त देवा : ।।८।। |

# अथ द्वात्रिंशोऽध्याय :

ॐ अस्य । अजरास : । दमाम् । अरित्रा : । अर्चद्धूमास इत्यर्चत् = धूमास : । अग्नय : । पावका : ❋। श्वितीचय : । श्वात्रास : । भुरण्यव : ।( वनर्षद : । वनसद इति वन = सद : )। वायव : । न । सोमा : ❋।।१।। हरय : । धूमकेतव इति धूम - केतव : । वातजूता इति वात - जूता : । उप । द्यवि ❋। यतन्ते । वृथक् । अग्नय : ❋।।२।। यज । न : । मित्रावरुणा । यज । देवान् । ऋतम् । बृहत् ❋। अग्ने । यक्षि । स्वम् । दमम् ❋।।३।। युक्ष्व । हि । देवहूतमानिति देव = हूतमान् । अश्वान् । अग्ने । रथीरिवेति रथी : = इव ❋। नि । होता । पूर्व्य : । सद : ❋।।४।। द्वे इति द्वे । विरूपे इति वि = रूपे । चरत : । स्वर्थे इति सु = अर्थे । अन्यान्येत्यन्य = अन्या । वत्सम् । उप । धापयेते इति धापयेते ❋। हरि : । अन्यस्याम् । भवति । स्वधावानिति स्वधा = वान् । शुक्र : । अन्यस्याम् । ददृशे । सुवर्चा इति सु = वर्चा : ❋।।५।। अयम् । इह । प्रथम : । धायि । धातृभि रिति धातृ = भि : । होता । यजिष्ठ : । अध्वरेषु । ईड्य : ❋। यम् । अप्नवान : । भृगव : । विरुरुचु रिति वि = रुरुचु : । वनेषु । चित्रम् । विभ्वमिति वि = भ्वम् । विशेविश इति विशे = विशे ❋।।६।। त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च । देवा : । नव । च । असपर्यन् ❋। औक्षन् । घृतै : । अस्तृणन् । बर्हि : । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ❋।।७।। मूर्धानम् । दिव : । अरतिम् । पृथिव्या : । वैश्वानरम् । ऋते । आ । जातम् । अग्निम् ❋। कविम् । सम्राज मिति सं = राजम् । अतिथिम् । जनानाम् । आसन् । आ । पात्रम् । जनयन्त । देवा : ❋।।८।।

| | |
|---|---|
| 32.9.a | अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । |
| 32.9.b | समिद्ध : शुक्र आहुत : ।।९।। |
| 32.10.a | विश्वेभि : सोम्यं मध्वग्न इन्द्रेण वायुना । |
| 32.10.b | पिबा मित्रस्य धामभि : ।।१०।। |
| 32.11.a | आ यदिषे नृपति न्तेज आनट् शुचिरेतो निषिक्तं द्यौरभीके । |
| 32.11.b | अग्नि : शर्धमनवद्यँ य्युवान॑ स्वाध्य ञ्जनयत्सूदयच्च ।।११।। |
| 32.12.a | अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । |
| 32.12.b | संजास्पत्य॑ सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महा॑सि ।।१२।। |
| 32.13.a | त्वा॑ हि मन्द्रतममर्कशोकैर्ववृमहे महि न : श्रोष्यग्ने । |
| 32.13.b | इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमा : ।।१३।। |
| 32.14.a | त्वे अग्ने स्वाहुत प्रियास : सन्तु सूरय : । |
| 32.14.b | यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ।।१४।। |
| 32.15.a | श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभि : । |
| 32.15.b | आसीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ।।१५।। |
| 32.16.a | विश्वेषामदितिर्यज्ञियानाँ विश्वेषामतिथिर्मानुषाणाम् । |
| 32.16.b | अग्निर्देवानामव आवृणान : सुमृळीको भवतु जातवेदा : ।।१६।। |

अग्निः । वृत्राणि । जङ्घनत् । द्रविणस्युः । विपन्यया *। समिद्ध इति सं = इद्धः । शुक्रः । आहुत इत्या = हुतः *।।९।। विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना *। पिब । मित्रस्य । धामभि रिति धाम = भिः *।।१०।। आ । यत् । इषे । नृपति मिति नृ = पतिम् । तेजः । आनट् । शुचि । रेतः । (निषिक्तम् । निसिक्त मिति नि = सिक्तम् )। द्यौः । अभीके *। अग्निः । शर्धम् । अनवद्यम् । युवानम् । स्वाध्यमिति सु = आध्यम् । जनयत् । सूदयत् । च *।।११।। अग्ने । शर्ध । महते । सौभगाय । तव । द्युम्नानि । उत्तमानीत्युत् = तमानि । सन्तु *। सम् ।( जास्पत्यम् । जाः पत्यमिति जाः = पत्यम् )। सुयम मिति सु = यमम् । आ । कृणुष्व ।( शत्रूयताम् । शत्रुयतामिति शत्रु = यताम् )। अभि । तिष्ठ । महाꣳसि *।।१२।। त्वाम् । हि । मन्द्रतम मिति मन्द्र = तमम् । अर्कशोकै रित्यर्क = शोकैः । ववृमहे । महि । नः । श्रोषि । अग्ने *। इन्द्रम् । न । त्वा । शवसा । देवता । वायुम् । पृणन्ति । राधसा । नृतमा इति नृ = तमाः *।।१३।। त्वे इति त्वे । अग्ने । स्वाहुतेति सु = आहुत । प्रियासः । सन्तु । सूरयः *। यन्तारः । ये । मघवान इति मघ = वानः । जनानाम् । ऊर्वाम् । दयन्त । गोनाम् *।।१४।। श्रुधि । श्रुत्कर्णेति श्रुत् = कर्ण । वन्हिभि रिति वन्हि = भिः । देवैः । अग्ने । सयावभि रिति सयाव = भिः *। आ । सीदन्तु । बर्हिषि । मित्रः । अर्यमा ।(प्रातर्यावाणः । प्रातर्यावान इति प्रातः = यावानः )। अध्वरम् *।।१५।। विश्वेषाम् । अदितिः । यज्ञियानाम् । विश्वेषाम् । अतिथिः । मानुषाणाम् *। अग्निः । देवानाम् । अवः । आवृणान इत्या = वृणानः । सुमृळीक इति सु = मृळीकः । भवतु । जातवेदा इति जात

| | |
|---|---|
| 32.17.a | महो अग्ने : समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये । |
| 32.17.b | श्रेष्ठे स्याम सवितु : सवीमनि तद्देवानामवो अद्या वृणीमहे ।।१७।।(१) |

| | |
|---|---|
| 32.18.a | आपश्चित्पिप्यु : स्तर्यो न गावो नक्षन्नृतं जरितारस्त इन्द्र । |
| 32.18.b | याहि वायुर्न नियुतो नो अच्छा त्वꣳ हि धीभिर्दयसे वि वाजान् ।।१।। |
| 32.19.a | गाव उपावतावतं मही यज्ञस्य रप्सुदा । |
| 32.19.b | उभा कर्णा हिरण्यया ।।२।। |
| 32.20.a | यदद्य सूर उदितेऽनागा मित्रो अर्यमा । |
| 32.20.b | सुवाति सविता भग : ।।३।। |
| 32.21.a | आ सुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम् । |
| 32.21.b | रसा दधीत वृषभम् । |
| 32.21.c | तं प्रत्नथायँ वेनश्चोदयत् ।।४।। |
| 32.22.a | आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचि : । |
| 32.22.b | महत्तद् वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ ।।५।। |
| 32.23.a | प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे । |
| 32.23.b | इन्द्रस्य यस्य सुमखꣳ सहो महि श्रवो नृम्णं च रोदसी सपर्यत : ।।६।। |
| 32.24.a | बृहन्निदिध्म एषां भूरि शस्तं पृथु : स्वरु : । |
| 32.24.b | येषामिन्द्रो युवा सखा ।।७।। |

= वेदा : *।।१६।। मह : । अग्ने : । समिधानस्येति सं = इधानस्य । शर्मणि । अनागा : । मित्रे । वरुणे । स्वस्तये *। श्रेष्ठे । स्याम । सवितु : । सवीमनि । तत् । देवानाम् । अव : । अद्य । वृणीमहे *।।१७।।१।।२४२-४५=१९७।।

आप : । चित् । पिप्यु : । स्तर्य : । न । गाव : । नक्षन् । ऋतम् । जरितार : । ते । इन्द्र *। याहि । वायु : । न । नियुत इति नि = युत : । न : । अच्छ । त्वम् । हि । धीभि : । दयसे । वि । वाजान् *।।१।। गाव : । उप । अवत । अवतम् । मही इति मही । यज्ञस्य । रप्सुदा *। उभा । कर्णा । हिरण्यया *।।२।। यत् । अद्य । सूरे । उदित इत्युत् = इते । अनागा : । मित्र : । अर्यमा *। सुवाति । सविता । भग : *।।३।। आ । सुते । सिञ्चत । श्रियम् । रोदस्यो : । अभिश्रिय मित्यभि = श्रियम् *। रसा । दधीत । वृषभम् *। तम् । प्रत्नथेति प्रत्न = था । अयम् । वेन : । चोदयत् ।।४।। आतिष्ठन्त मित्या = तिष्ठन्तम् । परि । विश्वे । अभूषन् । श्रिय : । वसानः । चरति । स्वरोचि रिति स्व = रोचि : *। महत् । तत् । वृष्ण : । असुरस्य । नाम । आ । विश्वरूप इति विश्व = रूप : । अमृतानि । तस्थौ *।।५।। प्र । व : । महे । मन्दमानाय । अन्धस : । अर्च । विश्वानराय । ( विश्वाभुवे । विश्वभुव इति विश्व = भुवे )*। इन्द्रस्य । यस्य । सुमख मिति सु = मखम् । सह : । महि । श्रव : । नृम्णम् । च । रोदसी इति रोदसी । सपर्यत : *।।६।। बृहन् । इत् । इध्मः । एषाम् । भूरि । शस्तम् । पृथु : । स्वरु : *। येषाम् । इन्द्र : । युवा । सखा *।।७।।

| | |
|---|---|
| 32.25.a | इन्द्रेहि मत्स्यन्धसो विश्वेभि : सोमपर्वभि : । |
| 32.25.b | महाँ (२) - अभिष्टिरोजसा ॥८॥ |
| 32.26.a | इन्द्रो वृत्रमवृणोच्छर्धनीति : प्र मायिनाममिनाद्वर्पणीति : । |
| 32.26.b | अहन्व्यꣳसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ॥९॥ |
| 32.27.a | कुतस्त्वमिन्द्र माहिन : सन्नेको यासि सत्पते किन्त इत्था । |
| 32.27.b | सं पृच्छसे समराण : शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे । |
| 32.27.c | महाँ (२) - इन्द्रो य ओजसा कदा चन स्तरीरसि कदा चन प्रयुच्छसि ॥१०॥ |
| 32.28.a | आ तत्त इन्द्रायव : पनन्ताभि य ऊर्वङ् गोमन्तं तितृत्सान् । |
| 32.28.b | सकृत्स्वँ य्ये पुरुपुत्रां महीꣳ सहस्रधारां बृहती न्दुदुक्षन् ॥११॥ |
| 32.29.a | इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे । |
| 32.29.b | तमुत्सवे च प्रसवे च सासहिमिन्द्रन्देवास : शवसाऽमदन्ननु ॥१२॥(२) |

| | |
|---|---|
| 32.30.a | विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता अविह्नुतम् । |

इन्द्र । आ । इहि । मत्सि । अन्धस : । विश्वेभि : । सोमपर्वभि रिति सोमपर्व = भि : ✱। महान् । अभिष्टि : । ओजसा ✱।।८।। इन्द्र : । वृत्रम् । अवृणोत् । शर्धनीति रिति शर्ध = नीति : । प्र । मायिनाम् । अमिनात् । (वर्पणीति : । वर्पनीति रिति वर्प = नीति : )✱। अहन् । व्यंश्स मिति वि = अंश्सम् । उशधक् । वनेषु । आवि : । धेना : । अकृणोत् । राम्याणाम् ✱।।९।। कुत : । त्वम् । इन्द्र । माहिन : । सन् । एक : । यासि । सत्पत इति सत् = पते । किम् । ते । इत्था ✱। सम् । पृच्छसे । समराण इति सं = अराण : । शुभानै : । वोचे : । तत् । न : । हरिव इति हरि = व : । यत् । ते । अस्मे इत्यस्मे ✱।।१०।। महान् । इन्द्र : । य : । ओजसा । कदा । चन । स्तरी : । । असि । कदा । चन । प्र । युच्छसि । आ । तत् । ते । इन्द्र । आयव : । पनन्त । अभि । ये । ऊर्वम् । गोमन्त मिति गो = मन्तम् । तितृत्सान् ✱। सकृत्स्वमिति सकृत् = स्वम् । ये । पुरुपुत्रा मिति पुरु = पुत्राम् । महीम् । सहस्रधारा मिति सहस्र = धाराम् । बृहतीम् । ( दुदुक्षन् । दुधुक्ष न्निति दुधुक्षन् )✱।।११।। इमाम् । ते । धियम् । प्र । भरे । मह : । महीम् । अस्य । स्तोत्रे । धिषणा । यत् । ते । आनजे ✱। तम् । उत्सव इत्युत् = सवे । च । प्रसव इति प्र = सवे । च ।( सासहिम् । ससहिमिति ससहिम् )। इन्द्रम् । देवास : । शवसा । अमदन् । अनु ✱।।१२।।२।।२०६-२१=१८५।।

विभ्राळिति वि = भ्राट् । बृहत् । पिबतु । सोम्यम् । मधु । आयु : । दधत् । यज्ञपता इति यज्ञ = पतौ । अविह्रुत मित्यवि = ह्रुतम् ✱।

| | |
|---|---|
| 32.30.b | वातजूतो यो अभिरक्षति त्मना प्रजा : पुपोष पुरुधा वि राजति ।।१।। |
| 32.31.a | उदु त्यं जातवेदसं देवँ वहन्ति केतवः । |
| 32.31.b | दृशे विश्वाय सूर्यम् ।।२।। |
| 32.32.a | येना पावक चक्षसा भुरण्यन्तं जनाँ (२) अनु । |
| 32.32.b | त्वँ वरुण पश्यसि ।।३।। |
| 32.33.a | दैव्या अध्वर्यू आ गतꣳ रथेन सूर्यत्वचा । |
| 32.33.b | मध्वा यज्ञꣳ समञ्जाथे । |
| 32.33.c | तं प्रत्नथाऽयँ वेनश्चोदयच्चित्रं देवानाम् ।।४।। |
| 32.34.a | आ न इळाभिर्विदथे सुशस्ति विश्वानर : सविता देव एतु । |
| 32.34.b | अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ।।५।। |
| 32.35.a | यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । |
| 32.35.b | सर्व न्तदिन्द्र ते वशे ।।६।। |
| 32.36.a | तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । |
| 32.36.b | विश्वमा भासि रोचनम् ।।७।। |
| 32.37.a | तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततꣳ सं जभार । |
| 32.37.b | यदेदयुक्त हरित : सधस्थादाद्रात्री वासस्तनुते सिमस्मै ।।८।। |
| 32.38.a | तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे । |

वातजूत इति वात = जूत : । य : । अभिरक्षतीत्यभि = रक्षति । त्मना । प्रजा इति प्र = जा : । पुपोष । पुरुधा । वि । राजति *।।१।। उत् । ॐ इत्यूँ । त्यम् । जातवेदस मिति जात = वेदसम् । देवम् । वहन्ति । केतव : *। दृशे । विश्वाय । सूर्यम् *।।२।। येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् । अनु *। त्वम् । वरुण । पश्यसि *।।३।। दैव्यौ । अध्वर्यू इत्यध्वर्यू । आ । गतम् । रथेन । सूर्यत्व चेति सूर्य = त्वचा *। मध्वा । यज्ञम् । सम् । अञ्जाथे इत्यञ्जाथे *।।४।। तम् । प्रत्नथेति प्रत्न = था । अयम् । वेन : । चोदयत् । चित्रम् । देवानाम् । आ । न : । इळाभि : । विदथे । सुशस्तीति सु = शस्ति । विश्वानर : । सविता । देव : । एतु *। अपि । यथा । युवान : । मत्सथ । न : । विश्वम् । जगत् । अभिपित्व इत्यभि = पित्वे । मनीषा *।।५।। यत् । अद्य । कत् । च । वृत्रहन्निति वृत्र = हन् । उदगा इत्युत् = अगा : । अभि । सूर्य *। सर्वम् । तत् । इन्द्र । ते । वशे *।।६।। तरणि : । विश्वदर्शत इति विश्व = दर्शत : ।( ज्योतिष्कृत् ।। ज्योति : कृदिति ज्योति : = कृत् )। असि । सूर्य *। विश्वम् । आ । भासि । रोचनम् *।।७।। तत् । सूर्यस्य । देवत्वमिति देव = त्वम् । तत् । महित्वमिति महि = त्वम् । मध्या । कर्तो : । विततं मिति वि = ततम् । सम् । जभार *। यदा । इत् । अयुक्त । हरित : । सधस्थादिति सध = स्थात् । आत् । रात्री । वास : । तनुते । सिमस्मै *।।८।। तत् । मित्रस्य । वरुणस्य । अभिचक्ष इत्यभि = चक्षे । सूर्य : । रूपम् । कृणुते । द्यो : । उपस्थ इत्युप = स्थे *।

| | |
|---|---|
| 32.38.b | अनन्तमन्यद्रुशदस्य पाज : कृष्णमन्यद्धरित : सं भरन्ति ।।९।। |
| 32.39.a | बण्महाँ (२) - असि सूर्य बळादित्य महाँ (२) - असि । |
| 32.39.b | महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ (२) - असि ।।१०।। |
| 32.40.a | बट् सूर्य श्रवसा महाँ (२) - असि सत्रा देव महाँ (२) - असि । |
| 32.40.b | मह्ना देवानामसुर्य : पुरोहितो विभु ज्योतिरदाभ्यम् ।।११।। |
| 32.41.a | श्रायन्त इव सूर्यँ विश्वेदिन्द्रस्य भक्षत । |
| 32.41.b | वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ।।१२।। |
| 32.42.a | अद्या देवा उदिता सूर्यस्य निरꣳहस : पिपृता निरवद्यात् । |
| 32.42.b | तन्नो मित्रो वरुणो मामहन्तामदिति : सिन्धु : पृथिवी उत द्यौ : ।।१३।। |
| 32.43.a | आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्य ञ्च । |
| 32.43.b | हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ।।१४।।(३) |

| | |
|---|---|
| 32.44.a | प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते । |
| 32.44.b | विशामक्तोरुषस : पूर्वहूतौ वायु : पूषा स्वस्तये नियुत्वान् ।।१।। |
| 32.45.a | इन्द्रवायू बृहस्पतिम् मित्राग्निम् पूषणं भगम् । |
| 32.45.b | आदित्यान्मारुतं गणम् ।।२।। |
| 32.46.a | वरुण : प्राविता भुवन्मित्रो विश्वाभिरूतिभि : । |

अनन्तम् । अन्यत् । रुशत् । अस्य । पाजः । कृष्णम् । अन्यत् । हरितः । सम् । भरन्ति *।।९।। बट् । महान् । असि । सूर्य । बट् । आदित्य । महान् । असि *। महः । ते । सतः । महिमा । पनस्यते । अद्धा । देव । महान् । असि *।।१०।। बट् । सूर्य । श्रवसा । महान् । असि । सत्रा । देव । महान् । असि *। मन्हा । देवानाम् । असुर्यः । पुरोहित इति पुरः = हितः । विभ्विति वि = भु । ज्योतिः । अदाभ्यम् *।।११।। श्रायन्त इवेति श्रायन्तः = इव । सूर्यम् । विश्वा । इत् । इन्द्रस्य । भक्षत *। वसूनि । जाते । जनमाने । ओजसा । प्रति । भागम् । न । दीधिम *।।१२।। अद्य । देवाः । उदितेत्युत् = इता । सूर्यस्य । निः । अंहसः । पिपृत । निः । अवद्यात् *। तत् । नः । मित्रः । वरुणः । (मामहन्ताम् । ममहन्तामिति ममहन्ताम् )। अदितिः । सिन्धुः । पृथिवी । उत । द्यौः *।।१३।। आ । कृष्णेन । रजसा । वर्तमानः । निवेशयन्निति नि = वेशयन् । अमृतम् । मर्त्यम् । च *। हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् *।।१४।।३।।२१५-१७=१९८।।

प्र । (वावृजे । ववृज इति ववृजे )। सुप्रया इति सु = प्रयाः । बर्हिः । एषाम् । आ । (विश्पतीव । विश्पती इवेति विश्पती = इव )। बीरिटे । इयाते इतीयाते *। विशाम् । अक्तोः । उषसः । पूर्वहूता इति पूर्व = हूतौ । वायुः । पूषा । स्वस्तये । नियुत्वान् *।।१।। इन्द्रवायू इतीन्द्रवायु । बृहस्पतिम् । मित्र । अग्निम् । पूषणम् । भगम् *। आदित्यान् । मारुतम् । गणम् *।।२।। वरुणः । प्रावितेति प्र = अविता । भुवत् । मित्रः । विश्वाभिः । ऊतिभि रित्यूति = भिः *।

| | |
|---|---|
| 32.46.b | करतां न : सुराधस : ।।३।। |
| 32.47.a | अधि न इन्द्रैषाँ विष्णो सजात्यानाम् । |
| 32.47.b | इता मरुतो अश्विना । |
| 32.47.c | तं प्रत्नथाऽयँ वेनश्चोदयद्ये देवास आ न इळाभिर्विश्वेभि : सोम्यं मध्वोमासश्चर्षणीधृत : ।।४।। |
| 32.48.a | अग्न इन्द्र वरुण मित्र देवा : शर्ध : प्र यन्त मारुतोत विष्णो । |
| 32.48.b | उभा नासत्या रुद्रो अध ग्ना : पूषा भग : सरस्वती जुषन्त ।।५।। |
| 32.49.a | इन्द्राग्नी मित्रावरुणाऽदितिश्वस्व : पृथिवीन्द्यां मरुत : पर्वताँ(२) अप :। |
| 32.49.b | हुवे विष्णुम् पूषणं ब्रंह्मणस्पतिं भगं नु शश्वसश्व सवितारमूतये ।।६।। |
| 32.50.a | अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषा : । |
| 32.50.b | य : शश्वसते स्तुवते धायि पज्र इन्द्रज्योष्ठा अस्माँ (२) - अवन्तु देवा : ।।७।। |
| 32.51.a | अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् । |
| 32.51.b | त्राध्वं न्नो देवा निजुरो वृकस्य त्राध्वङ् कर्तादवपदो यजत्रा : ।।८।। |
| 32.52.a | विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नय : समिद्धा : । |
| 32.52.b | विश्वे नो देवा अवसाऽऽगमन्तु विश्वमस्तु द्रविणँ वाजो अस्मे ।।९।। |
| 32.53.a | विश्वे देवा : शृणुतेमश्व हवम् मे ये अन्तरिक्षे य उप द्यवि ष्ठ । |

करताम् । न : । सुराधस इति सु = राधस : ॥३॥ अधि । न : । इन्द्र । एषाम् । विष्णो इति विष्णो । सजात्यानामिति स = जात्यानाम् ॥ इता । मरुत : । अश्विना ॥ तम् । प्रत्नथेति प्रत्न = था । अयम् । वेन : । चोदयत् । ये । देवास : । आ । न : । इळाभि : । विश्वेभि : । सोम्यम् । मधु । ओमास : । ( चर्षणीधृत : । चर्षणिधृत इति चर्षणि = धृत : ) ॥४॥ अग्ने । इन्द्र । वरुण । मित्र । देवा : । शर्ध : । प्र । यन्त । मारुत । उत । विष्णो इति विष्णो ॥ उभा । नासत्या । रुद्र : । अध । ग्ना : । पूषा । भग : । सरस्वती । जुषन्त ॥५॥ इन्द्राग्नी इतीन्द्राग्नी । मित्रावरुणा । अदितिम् । स्वरिति स्व : । पृथिवीम् । द्याम् । मरुत : । पर्वतान् । अप : ॥ हुवे । विष्णुम् । पूषणम् । ब्रह्मण : । पतिम् । भगम् । नु । शꣳसम् । सवितारम् । ऊतये ॥६॥ अस्मे इत्यस्मे । रुद्रा : । मेहना । पर्वतास : । वृत्रहत्य इति वृत्र = हत्ये । भरहूता इति भर = हूतौ । सजोषा इति स = जोषा : ॥ य : । शꣳसते । स्तुवते । धायि । पज्र : । इन्द्रज्येष्ठा इतीन्द्र = ज्येष्ठा : । अस्मान् । अवन्तु । देवा : ॥७॥ अर्वाञ्च : । अद्य । भवत । यजत्रा : । आ । व : । हार्दि । भयमान : । व्ययेयम् ॥ त्राध्वम् । न : । देवा : । निजुर इति नि = जुर : । वृकस्य । त्राध्वम् । कर्तात् । अवपद इत्यव = पद : । यजत्रा : ॥८॥ विश्वे । अद्य । मरुत : । विश्वे । ऊती । विश्वे । भवन्तु । अग्नय : । समिद्धा इति सं = इद्धा : ॥ विश्वे । न : । देवा : । अवसा । आ । गमन्तु । विश्वम् । अस्तु । द्रविणम् । वाज : । अस्मे इत्यस्मे ॥९॥ विश्वे । देवा : । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्षे । ये । उप । द्यवि । स्थ ॥

| | |
|---|---|
| 32.53.b | ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वन्म् ।।१०।। |
| 32.54.a | देवेभ्यो हि प्रथमँ य्यज्ञियेभ्योऽमृतत्वꣳ सुवसि भागमुत्तमम् । |
| 32.54.b | आदिद्दामानꣳ सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्य : ।।११।।(४) |

| | |
|---|---|
| 32.55.a | प्र वायुमच्छा बृहती मनीषा बृहद्रयिँ विश्ववारꣳ रथप्राम् । |
| 32.55.b | द्युतद्यामा नियुत : पत्यमान : कवि : कविमियक्षसि प्रयज्यो ।।१।। |
| 32.56.a | इन्द्रवायू इमे सुता उप प्रयोभि रागतम् । |
| 32.56.b | इन्दवो वामुशन्ति हि ।।२।। |
| 32.57.a | मित्रꣳ हुवे पूतदक्षँ वरुणं च रिशादसम् । |
| 32.57.b | धियङ् घृताचीꣳ साधन्ता ।।३।। |
| 32.58.a | दस्रा युवाकव : सुता नासत्या वृक्तबर्हिष : । |
| 32.58.b | आ यातꣳ रुद्रवर्तनी । |
| 32.58.c | तं प्रत्नथाऽयँ वेनश्चोदयत् ।।४।। |
| 32.59.a | विदद्यदी सरमा रुग्णमद्रेर्महि पाथ : पूर्व्यꣳ सध्र्यक्क : । |
| 32.59.b | अग्रन् नयत्सुपद्यक्षराणामच्छा रवम् प्रथमा जानती गात् ।।५।। |
| 32.60.a | नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुर एतारमग्ने : । |
| 32.60.b | एमेनमवृधन्नमृता अमर्त्यँ वैश्वानरं क्षैत्रजित्याय देवा : ।।६।। |

ये । अग्निजिह्वा इत्यग्नि = जिह्वा : । उत । वा । यजत्रा : । आसद्येत्या = सद्य । अस्मिन् । बर्हिषि । मादयध्वम् ✱।।१०।। देवेभ्य : । हि । प्रथमम् । यज्ञियेभ्य : । अमृतत्वमित्य मृत = त्वम् । सुवसि । भागम् । उत्तममित्युत् = तमम् ✱। आत् । इत् । दामानम् । सवित : । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्य : ✱।।११।।४।।१९०-३५=१५५।।

प्र । वायुम् । अच्छ । बृहती । मनीषा । बृहद्रयि मिति बृहत् = रयिम् । विश्ववार मिति विश्व = वारम् । रथप्रामिति रथ = प्राम् ✱। द्युतद्या मेति द्युतत् = यामा । नियुत इति नि = युत : । पत्यमान : । कवि : । कविम् । इयक्षसि । प्रयज्यो इति प्र = यज्यो ✱।।१।। इन्द्रवायू इतीन्द्रवायू । इमे । सुता : । उप । प्रयोभि रिति प्रय : = भि : । आ । गतम् ✱। इन्दव : । वाम् । उशन्ति । हि ✱।।२।। मित्रम् । हुवे । पूतदक्ष मिति पूत = दक्षम् । वरुणम् । च । रिशादसम् ✱। धियम् । घृताचीम् । साधन्ता ✱।।३।। दस्रा । युवाकव : । सुता : । नासत्या । वृक्तबर्हिष इति वृक्त = बर्हिष : ✱। आ । यातम् । रुद्रवर्तनी इति रुद्र = वर्तनी ✱।। तम् । प्रत्नथेति प्रत्न = था । अयम् । वेन : । चोदयत् ।।४।। विदत् । यदि । सरमा । रुग्णम् । अद्रे : । महि । पाथ : । पूर्व्यम् । सध्र्यक् । करितिक : ✱। अग्रम् । नयत् । सुपदीति सु = पदी । अक्षराणाम् । अच्छ । रवम् । प्रथमा । जानती । गात् ✱।।५।। नहि । स्पशम् । अविदन् । अन्यम् । अस्मात् । वैश्वानरात् । पुर एतार मिति पुर : = एतारम् । अग्ने : ✱। आ । ईम् । एनम् । अवृधन् । अमृता : । अमर्त्यम् । वैश्वानरम् । क्षैत्रजित्या येति क्षैत्र = जित्याय । देवा : ✱।।६।।

| | |
|---|---|
| 32.61.a | उग्रा विघनिना मृध इन्द्राग्नी हवामहे । |
| 32.61.b | ता नो मृळात ईदृशे ।।७।। |
| 32.62.a | उपास्मै गायता नर : पवमानायेन्दवे । |
| 32.62.b | अभि देवाँ (२) - इयक्षते ।।८।। |
| 32.63.a | ये त्वाऽहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये ग इष्टौ । |
| 32.63.b | ये त्वा नूनमनुमदन्ति विप्रा : पिबेन्द्र सोमꣳ सगणो मरुद्भि : ।।९।। |
| 32.64.a | जनिष्ठा उग्र : सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमान : । |
| 32.64.b | अवर्धन्निन्द्रम् मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ।।१०।। |
| 32.65.a | आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि । |
| 32.65.b | महान्महीभिरूतिभि : ।।११।। |
| 32.66.a | त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृध : । |
| 32.66.b | अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यत : ।।१२।। |
| 32.67.a | अनु ते शुष्म न्तुरयन्तमीयतु : क्षोणी शिशुं न मातरा । |
| 32.67.b | विश्वास्ते स्पृध : श्नथयन्त मन्यवे वृत्रँ य्यदिन्द्र तूर्वसि ।।१३।। |
| 32.68.a | यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्त : । |
| 32.68.b | आ वोऽर्वाची सुमति र्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसत् ।।१४।। |
| 32.69.a | अदब्धेभि : सवित : पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम् । |

उग्रा । विघनिनेति वि = घनिना । मृध : । इन्द्राग्नी इतीन्द्राग्नी । हवामहे *। ता । न : । मृळात : । ईदृशे *।।७।। उप । अस्मै । गायत । नर : । पवमानाय । इन्दवे *। अभि । देवान् । इयक्षते *।।८।। ये । त्वा । अहिहत्य इत्यहि = हत्ये । मघवन्निति मघ = वन् । अवर्धन् । ये । शांबरे । हरिव इति हरि = व : । ये । ग इष्टा इति गो = -इष्टौ *। ये । त्वा । नूनम् । अनुमदन्तीत्यनु = मदन्ति । विप्रा : । पिब । इन्द्र । सोमम् । सगण इति स = गण : । मरुद्भि रिति मरुत् = भि : *।।९।। जनिष्ठा : । उग्र : । सहसे । तुराय । मन्द्र : । ओजिष्ठ : । बहुलाभिमान इति बहुल = अभिमान : *। अवर्धन् । इन्द्रम् । मरुत : । चित् । अत्र । माता । यत् । वीरम् । दधनत् । धनिष्ठा *।।१०।। आ । तु । न : । इन्द्र । वृत्रहन्निति वृत्र = हन् । अस्माकम् । अर्धम् । आ । गहि *। महान् । महीभि : । ऊतिभि रित्यूति = भि : *।।११।। त्वम् । इन्द्र । प्रतूर्तिष्विति प्र = तूर्तिषु । अभि । विश्वा : । असि । स्पृध : *। अशस्तिहेत्यशस्ति = हा । जनिता । विश्वतूरिति विश्व = तू : । असि । त्वम् । तूर्य । तरुष्यत : *।।१२।। अनु । ते । शुष्मम् । तुरयन्तम् । ईयतु : । क्षोणी इति क्षोणी । शिशुम् । न । मातरा *। विश्वा : । ते । स्पृध : । श्नथयन्त । मन्यवे । वृत्रम् । यत् । इन्द्र । तूर्वसि *।।१३।। यज्ञ : । देवानाम् । प्रति । एति । सुम्नम् । आदित्यास : । भवत । मृळयन्त : *। आ । व : । अर्वाची । सुमतिरिति सु = मति : । ववृत्यात् । अꣳहो : । चित् । या । वरिवोवित्तरेति वरिवोवित् = तरा । असत् ।।१४।। अदब्धेभि : । सवितरिति सवित : । पायुभि रिति पायु = भि : । त्वम् । शिवेभि : । अद्य । परि । पाहि । न : । गयम् *।

| | |
|---|---|
| 32.69.b | हिरण्यजिह्व : सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ।।१५।।(४) |

| | |
|---|---|
| 32.70.a | प्र वीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमन्त : सुतास : । |
| 32.70.b | वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ।।१।। |
| 32.71.a | गाव उपावतावतं मही यज्ञस्य रप्सुदा । |
| 32.71.b | उभा कर्णा हिरण्यया ।।२।। |
| 32.72.a | काव्ययोराजानेषु क्रत्वा दक्षस्य दुरोणे । |
| 32.72.b | रिशादसा सधस्थ आ ।।३।। |
| 32.73.a | दैव्या अध्वर्यू आ गतꣳ रथेन सूर्यत्वचा । |
| 32.73.b | मध्वा यज्ञꣳ समञ्जाथे । |
| 32.73.c | तं प्रत्नथाऽयँ वेनश्चोदयत् ।।४।। |
| 32.74.a | तिरश्चीनो विततोरश्मिरेषामध : स्विदासी(३) दुपरि स्विदासी(३)त् । |
| 32.74.b | रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयति : परस्तात् ।।५।। |
| 32.75.a | आ रोदसी अपृणदा स्वर्महज्ञातँ य्यदेनमपसो अधारयन् । |
| 32.75.b | सो अध्वराय परि णीयते कविरत्यो न वाजसातये चनोहित : ।।६।। |
| 32.76.a | उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा । |
| 32.76.b | आङ्गूषैराविवासत : ।।७।। |

हिरण्यजिह्व इति हिरण्य = जिह्व : । सुविताय । नव्यसे । रक्ष । माकि : । न : । अघश॑ंसस इत्यघ = श॑ंसस : । ईशत *।।१४।।५।।२१९-३४=१८५।।

प्र । वीरयेतिवीर = या । शुचय : । दद्रिरे । वाम् । अध्वर्युभि रित्यध्वर्यु = भि : । मधुमन्त इति मधु = मन्त : । सुतास : *। वह । वायो इति वायो । नियुत इति नि = युत : । याहि । अच्छ । पिब । सुतस्य । अन्धस : । मदाय *।।१।। गाव : । उप । अवत । अवतम् । मही इति मही । यज्ञस्य । रप्सुदा *। उभा । कर्णा । हिरण्यया *।।२।। काव्ययो : । आजानेष्वित्या = जानेषु । क्रत्वा । दक्षस्य । दुरोणे *। रिशादसा । सधस्थ इति सध = स्थे । आ *।।३।। दैव्यौ । अध्वर्यू इत्यध्वर्यू । आ । गतम् । रथेन । सूर्यत्व चेति सूर्य = त्वचा *। मध्वा । यज्ञम् । सम् । अञ्जाथे इत्यञ्जाथे *। तम् । प्रत्नथेति प्रत्न = था । अयम् । वेन : । चोदयत् ।।४।। तिरश्चीन : । वितत इति वि = तत : । रश्मि : । एषाम् । अध : । स्तित् । आसी (३) त् । उपरि । स्वित् । आसी (३) त् *। रेतोधा इति रेत : = धा : । आसन् । महिमान : । आसन् । स्वधा । अवस्तात् । प्रयति रिति प्र = यति : । परस्तात् *।।५।। आ । रोदसी इति रोदसी । अपृणत् । आ । स्व : । महत् । जातम् । यत् । एनम् । अपस : । अधारयन् *। स : । अध्वराय । परि । नीयते । कवि : । अत्य : । न । वाजसातय इति वाज = सातये । चनोहित इति चन : = हित : *।।६।। उक्थेभि : । वृत्रहन्तमेति वृत्रहन् = तमा । या । मन्दाना । चित् । आ । गिरा *। आङ्गूषै : । आविवासत इत्या = विवासत : *।।७।।

| | |
|---|---|
| 32.77.a | उप न : सूनवो गिर : शृण्वन्त्वमृतस्य ये । |
| 32.77.b | सुमृळीका भवन्तु न : ।।८।। |
| 32.78.a | ब्रह्माणि मे मतय : शꣳ सुतास : शुष्म इयर्ति प्रभृतो मे अद्रि : । |
| 32.78.b | आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ।।९।। |
| 32.79.a | अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ (२) - अस्ति देवता विदान : । |
| 32.79.b | न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ।।१०।। |
| 32.80.a | तदिदास भुवनेषु ज्येष्ठँ य्यतो जज्ञ उग्रस्त्वेषनृम्ण : । |
| 32.80.b | सद्यो जज्ञानो नि रिणाति शत्रूननु यँ विश्वे मदन्त्यूमा : ।।११।। |
| 32.81.a | इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम । |
| 32.81.b | पावकवर्णा : शुचयो विपश्चितोऽभि स्तोमैरनूषत ।।१२।। |
| 32.82.a | यस्यायँ विश्व आर्यो दास : शेवधिपा अरि : । |
| 32.82.b | तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयि : ।।१३।। |
| 32.83.a | अयꣳ सहस्रमृषिभि : सहस्कृत : समुद्र इव पप्रथे । |
| 32.83.b | सत्य : सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ।।१४।। |

उप । न : । सूनव : । गिर : । शृण्वन्तु । अमृतस्य । ये ✱। सुमृळीका इति सु = मृळीका : । भवन्तु । न : ✱।।८।। ब्रह्माणि । मे । मतय : । शम् । सुतास : । शुष्म : । इयर्ति । प्रभृत इति प्र = भृत : । मे । अद्रि : ✱। आ । शासते । प्रति । हर्यन्ति । उक्था । इमा । हरी इति हरी । वहत : । ता । न : । अच्छ ✱।।९।। अनुत्तम् । आ । ते । मघवन्निति मघ = वन् । नकि : । नु । न । त्वावा निति त्वा = वान् । अस्ति । देवता । विदान : ✱। न । जायमान : । नशते । न । जात : । यानि । करिष्या । कृणुहि । प्रवृद्धेति प्र = वृद्ध ✱।।१०।। तत् । इत् । आस । भुवनेषु । ज्येष्ठम् । यत : । जज्ञे । उग्र : । त्वेषनृम्ण इति त्वेष = नृम्ण : ✱। सद्य : । जज्ञान : । नि । रिणाति । शत्रून् । अनु । यम् । विश्वे । मदन्ति । ऊमा : ✱।।११।। इमा : । ऊँ इत्यूँ । त्वा । (पुरूवसो । पुरुवसो इति पुरु = वसो )। गिर : । वर्धन्तु । या : । मम ✱। पावकवर्णा इति पावक = वर्णा : । शुचय : । विपश्चित इति विप : = चित : । अभि । स्तोमै : । अनूषत ✱।।१२।। यस्य । अयम् । विश्व : । आर्य : । दास : । शेवधिपा इति शेवधि = पा : । अरि : ✱। तिर : । चित् । अर्ये । रुशमे । पवीरवि । तुभ्य । इत् । स : । अज्यते । रयि : ✱।।१३।। अयम् । सहस्रम् । ऋषिभि रित्यृषि = भि : । (सहस्कृत : । सह : कृत इति सह : = कृत : )। समुद्र इवेति समुद्र : = इव । पप्रथे ✱। सत्य : । स : । अस्य । महिमा । गृणे । शव : । यज्ञेषु । विप्रराज्य इति विप्र = राज्ये ✱।।१४।।

| | |
|---|---|
| 32.84.a | अदब्धेभि : सवित : पायुभिष्ट्व॒ शिवेभिरद्य परि पाहि नो गयम् । |
| 32.84.b | हिरण्यजिह्व : सुविताय नव्यसे रक्षा माकिर्नो अघश॒स ईशत ।।१५।।(६) |

अस्याजरास : सप्तदश ।।१७।। आपश्चिद् द्वादश ।।१२।। विभ्राट् चतुर्दश ।।१४।। प्रवावृज एकादश ।।११।। प्रवायुं पञ्चदश ।।१५।। प्रवीरयेति च पञ्चदश ।।१५।। षळनुवाकेषु चतुरशीति : ।।८४।।

## ।। इति शुक्लयजु : काण्वसंहितायां द्वात्रिंशोऽध्याय : ।।३२।।

अदब्धेभि : । सवितरिति सवित : । पायुभि रिति पायु = भि : । त्वम् । शिवेभि : । अद्य । परि । पाहि । न : । गयम् *। हिरण्यजिह्व इति हिरण्य = जिह्व : । सुविताय । नव्यसे । रक्ष । माकि : । न : । अघशꣳस इत्यघ = शꣳस : । ईशत *।।१५।।६।।२३०-४३=१८७।। आहत्य पद संख्या ।।१३०२-१९५=११०७।।

## इति द्वात्रिंशोऽध्याय :

# || इति द्वात्रिंशोऽध्याय : ||

| Adhyaya | 32 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 242 | 45 | 197 |
| 2 | 206 | 21 | 185 |
| 3 | 215 | 17 | 198 |
| 4 | 190 | 35 | 155 |
| 5 | 219 | 34 | 185 |
| 6 | 230 | 43 | 187 |
| Total | 1302 | 195 | 1107 |

# ।। अथ त्रयस्त्रिंशोऽध्याय : ।।

| | |
|---|---|
| 33.1.a | यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । |
| 33.1.b | दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मन : शिवसङ्कल्पमस्तु ।।१।। |
| 33.2.a | पितुं नु स्तोषं महो धर्माणं तविषीम् । |
| 33.2.b | यस्य त्रितो व्योजसा वृत्रँ विपर्वमर्दयत् ।।२।। |
| 33.3.a | अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । |
| 33.3.b | क्रत्वे दक्षाय नो हिनु प्र ण आयूᳬषि तारिष : ।।३।। |
| 33.4.a | सिनीवालि पृथुष्टुके या देवानामसि स्वसा । |
| 33.4.b | जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि न : ।।४।। |
| 33.5.a | पञ्च नद्य : सरस्वतीमपि यन्ति सस्रोतस : । |
| 33.5.b | सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ।।५।। |
| 33.6.a | त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभव : शिव : सखा । |
| 33.6.b | तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टय : ।।६।। |
| 33.7.a | त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य । |
| 33.7.b | त्राता तोकस्य तनये गवामस्यनिमेषᳬ रक्षमाणस्तव व्रते ।।७।। |
| 33.8.a | उत्तानायामव भरा चिकित्वान्त्सद्य : प्रवीता वृषणं जजान । |
| 33.8.b | अरुषस्तूपो रुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट ।।८।। |

# अथ त्रयस्त्रिंशोऽध्याय :

ॐ यत् । जाग्रत : । दूरम् । उदैतीत्युत् = ऐति । दैवम् । तत् । ॐ इत्यूँ ।
सुप्तस्य । तथा । एव । एति ✱। दूरङ्गममिति दूरं = गमम् । ज्योतिषाम् । ज्योति
: । एकम् । तत् । मे । मन : । शिवसङ्कल्प मिति शिव = सङ्कल्पम् । अस्तु
✱।।१।। पितुम् । नु । स्तोषम् । मह : । धर्माणम् । तविषीम् ✱। यस्य । त्रित
: । वि । ओजसा । वृत्रम् । विपर्व मिति वि = पर्वम् । अर्दयत् ✱।।२।। अनु ।
इत् । अनुमत इत्यनु = मते । त्वम् । मन्यासै । शम् । च । न : । कृधि ✱।
क्रत्वे । दक्षाय । न : । हिनु । प्र । न : । आयूंषि । तारिष : ✱।।३।।
सिनीवालि । (पृथुष्टुके । पृथुस्तुक इति पृथु = स्तुके )। या । देवानाम् । असि ।
स्वसा ✱। जुषस्व । हव्यम् । आहुत मित्या = हुतम् । प्रजा मिति प्र = जाम् ।
देवि । दिदिड्ढि । न : ✱।।४।। पञ्च । नद्य : । सरस्वतीम् । अपि । यन्ति ।
सस्रोतस इति स = स्रोतस : ✱। सरस्वती । तु । पञ्चधा । सो इति सो । देशे ।
अभवत् । सरित् ✱।।५।। त्वम् । अग्ने । प्रथम : । अङ्गिरा : । ऋषि : । देव :
। देवानाम् । अभव : । शिव : । सखा ✱। तव । व्रते । कवय : । विद्मनापस
इति विद्मन = अपस : । अजायन्त । मरुत : । भ्राजदृष्टय इति भ्राजत् = ऋष्टय
: ✱।।६।। त्वम् । न : । अग्ने । तव । देव । पायुभि रिति पायु = भि : ।
मघोन : । रक्ष । तन्व : । च । वन्द्य ✱। त्राता । तोकस्य । तनये । गवाम् ।
असि । अनिमेष मित्यनि = मेषम् । रक्षमाण : । तव । व्रते ✱।।७।। उत्तानायाम्
। अव । भर । चिकित्वान् । सद्य : । प्रवीतेति प्र = वीता । वृषणम् । जजान
✱। अरुषस्तूप इत्यरुष = स्तूप : । रुशत् । अस्य । पाज : । इळाया : । पुत्र :

| | |
|---|---|
| 33.9.a | इळायास्त्वा पदे वयं नाभा पृथिव्या अधि । |
| 33.9.b | जातवेदो निधीमह्यग्ने हव्याय वोळहवे ॥९॥ |
| 33.10.a | प्र मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत् । |
| 33.10.b | सुवृक्तिभि : स्तुवत ऋग्मियायार्चामार्क न्नरे विश्रुताय ॥१०॥ |
| 33.11.a | प्र वो महे महि नमो भरध्वमाङ्गूष्यꣳ शवसानाय साम । |
| 33.11.b | येना न : पूर्वे पितर : पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन् ॥११॥ |
| 33.12.a | इच्छन्ति त्वा सोम्यास : सखाय : सुन्वन्ति सोमं दधति प्रयाꣳसि । |
| 33.12.b | तितिक्षन्ते अभिशस्ति ञ्जनानामिन्द्र त्वदा कश्चन हि प्रकेत : ॥१२॥ |
| 33.13.a | न ते दूरे परमा चिद्रजाꣳस्या तु प्र याहि हरिवो हरिभ्याम् । |
| 33.13.b | स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाण : समिधाने अग्नौ ॥१३॥ |
| 33.14.a | अषाळहँ य्युत्सु पृतनासु पप्रिꣳ स्वर्षामप्साँ वृजनस्य गोपाम् । |
| 33.14.b | भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥१४॥ |
| 33.15.a | सोमो धेनुꣳ सोमो अर्वन्तमाशुꣳ सोमो वीरं कर्मण्य न्ददाति । |
| 33.15.b | सादन्यँ विदथ्यꣳ सभेयम् पितृश्रवणँ य्यो ददाशदस्मै ॥१५॥ |
| 33.16.a | त्वमिमा ओषधी : सोम विश्वास्त्वमपो अजनयस्त्वं गा : । |

। वयुने । अजनिष्ट ॥८॥ इळाया : । त्वा । पदे । वयम् । नाभा । पृथिव्या : । अधि ॥ जातवेद इति जात = वेद : । नि । धीमहि । अग्ने । हव्याय । वोळ्हवे ॥९॥ प्र । मन्महे । शवसानाय । शूषम् । आङ्गूषम् । गिर्वणसे । अङ्गिरस्वत् ॥ सुवृक्तिभि रिति सुवृक्ति = भि : । स्तुवते । ऋग्मियाय । अर्चाम । अर्कम् । नरे । विश्रुतायेति वि = श्रुताय ॥१०॥ प्र । व : । महे । महि । नम : । भरध्वम् । आङ्गूष्यम् । शवसानाय । साम ॥ येन । न : । पूर्वे । पितर : । पदज्ञा इति पद = ज्ञा : । अर्चन्त : । अङ्गिरस : । गा : । अविन्दन् ॥११॥ इच्छन्ति । त्वा । सोम्यास : । सखाय : । सुन्वन्ति । सोमम्। दधति । प्रयांसि ॥ तितिक्षन्ते । अभिशस्ति मित्यभि = शस्तिम् । जनानाम् । इन्द्र । त्वत् । आ । क : । चन । हि । प्रकेत इति प्र = केत : ॥१२॥ न । ते । दूरे । परमा । चित् । रजांसि । आ । तु । प्र । याहि । हरिव इति हरि = व : । हरिभ्या मिति हरि = भ्याम् ॥ स्थिराय । वृष्णे । सवना । कृता । इमा । युक्ता : । ग्रावाण : । समिधान इति सं = इधाने । अग्नौ ॥१३॥ अषाळ्हम् । युत्स्विति युत् = सु । पृतनासु । पप्रिम् ।( स्वर्षाम् । स्वस्सामिति स्व : = साम् )। अप्साम् । वृजनस्य । गोपाम् ॥ भरेषुजामिति भरेषु = जाम् । सुक्षिति मिति सु = क्षितिम् । सुश्रवस मिति सु = श्रवसम् । जयन्तम् । त्वाम् । अनु । मदेम । सोम ॥१४॥ सोम : । धेनुम् । सोम : । अर्वन्तम् । आशुम् । सोम : । वीरम् । कर्मण्यम् । ददाति ॥ (सादन्यम् । सदन्यमिति सदन्यम् )। विदथ्यम् । सभेयम् । पितृश्रवण मिति पितृ = श्रवणम् । य : । ददाशत् । अस्मै ॥१५॥ त्वम् । इमा :। ओषधी :। सोम । विश्वा :। त्वम् । अप :। अजनय :। त्वम् । गा :॥

| | |
|---|---|
| 33.16.b | त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥१६॥ |
| 33.17.a | देवेन नो मनसा देव सोम रायो भाग९ सहसावन्नभि युध्य । |
| 33.17.b | मा त्वाऽऽतनदीशिषे वीर्यस्योभयेभ्य : प्रचिकित्सा ग इष्टौ ॥१७॥ |
| 33.18.a | अष्टौ व्यख्यत्ककुभ : पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् । |
| 33.18.b | हिरण्याक्ष : सविता देव आऽगाद्दधद्रत्ना दाशुषे वार्याणि ॥१८॥ |
| 33.19.a | हिरण्यपाणि : सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते । |
| 33.19.b | अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥१९॥ |
| 33.20.a | हिरण्यहस्तो असुर : सुनीथ : सुमृळीक : स्ववा यात्वर्वाङ् । |
| 33.20.b | अपसेधन्रक्षसो यातुधानानस्थाद्देव : प्रतिदोषं गृणान : ॥२०॥ |
| 33.21.a | ये ते पन्था : सवित : पूर्व्यासोऽरेणव : सुकृता अन्तरिक्षे । |
| 33.21.b | तेभिर्नो अद्य पथिभि : सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥२१॥ |
| 33.22.a | उभा पिबतमश्विनोभा न : शर्म यच्छतम् । |
| 33.22.b | अविद्रियाभिरूतिभि : ॥२२॥ |
| 33.23.a | अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् । |

त्वम् । आ । ततन्थ । उरु । अन्तरिक्षम् । त्वम् । ज्योतिषा । वि । तमः । ववर्थ ॥१६॥ देवेन । नः । मनसा । देव । सोम । रायः । भागम् । सहसावन्निति सहसा = वन् । अभि । युध्य । मा । त्वा । आ । तनत् । ईशिषे । वीर्यस्य । उभयेभ्यः । प्र । चिकित्स । गइष्टा इति गो = इष्टौ ॥१७॥ अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिन्धून् । हिरण्याक्ष इति हिरण्य = अक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥१८॥ हिरण्यपाणि रिति हिरण्य = पाणिः । सविता । विचर्षणि रिति वि = चर्षणिः । उभे इत्युभे । द्यावापृथिवी इति द्यावापृथिवी । अन्तः । ईयते । अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ॥१९॥ हिरण्यहस्त इति हिरण्य = हस्तः । असुरः । सुनीथ इति सु = नीथः । सुमृळीक इति सु = मृळीकः । स्ववानिति स्व = वान् । यातु । अर्वाङ् । अपसेधन्नित्यप = सेधन् । रक्षसः । यातुधाना निति यातु = धानान् । अस्थात् । देवः । प्रतिदोषमिति प्रति = दोषम् । गृणानः ॥२०॥ ये । ते । पन्थाः । सवितरिति सवितः । पूर्व्यासः । अरेणवः । सुकृता इति सु = कृताः । अन्तरिक्षे । तेभिः । नः । अद्य । पथिभि रिति पथि = भिः । सुगेभि रिति सु = गेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥२१॥ उभा । पिबतम् । अश्विना । उभा । नः । शर्म । यच्छतम् । अविद्रियाभिः । ऊतिभि रित्यूति = भिः ॥२२॥ अप्नस्वतीम् । अश्विना । वाचम् । अस्मे इत्यस्मे । कृतम् । नः । दस्रा । वृषणा । मनीषाम् ।

| | |
|---|---|
| 33.23.b | अद्यूत्येऽवसे निह्वये वाँ वृधे च नो भवतँ वाजसातौ ॥२३॥ |
| 33.24.a | द्युभिरक्तुभि : परि पातमस्मानरिष्टेभिरश्विना सौभगेभि : । |
| 33.24.b | तन्नो मित्रो वरुणो मामहन्तामदिति : सिन्धु : पृथिवी उत द्यौ : ॥२४॥ |
| 33.25.a | आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं ञ्च । |
| 33.25.b | हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥२५॥(१) |

| | |
|---|---|
| 33.26.a | आ रात्रि पार्थिवꣳ रज : पितुरप्रायि धामभि : । |
| 33.26.b | दिव : सदाꣳसि बृहती वि तिष्ठस आ त्वेषँ वर्तते तम : ॥१॥ |
| 33.27.a | उषस्तच्चित्रमा भरास्मभ्यँ वाजिनीवति । |
| 33.27.b | येन तोकं च तनयं च धामहे ॥२॥ |
| 33.28.a | प्रातर्जितं भगमुग्रꣳ हुवेम वयं पुत्रमदितेर्यो विधर्ता । |
| 33.28.b | आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगम् भक्षीत्याह ॥३॥ |
| 33.29.a | पूषन्तव व्रते वयं न रिष्येम कदा चन । |
| 33.29.b | स्तोतारस्त इहस्मसि ॥४॥ |
| 33.30.a | पथस्पथ : परिपतिँ वचस्या कामेन कृतो अभ्यानळर्कम् । |
| 33.30.b | स नो रासच्छुरुधश्चन्द्राग्रा धियन्धियꣳ सीषधाति प्र पूषा ॥५॥ |

अद्यूत्ये । अवसे । नि । ह्वये । वाम् । वृधे । च । नः । भवतम् । वाजसाता इति वाज = सातौ ✱।।२३।। द्युभिरिति द्यु = भिः । अक्तुभि रित्यक्तु = भिः । परि । पातम् । अस्मान् । अरिष्टेभिः । अश्विना । सौभगेभिः ✱। तत् । नः । मित्रः । वरुणः । (मामहन्ताम् । ममहन्तामिति ममहन्ताम् )। अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ✱।।१४।। आ । कृष्णेन । रजसा । वर्तमानः । निवेशयन्निति नि = वेशयन् । अमृतम् । मर्त्यम् । च ✱। हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ✱।।१५।।१।।४१७-२६=३९१।।

आ । रात्रि । पार्थिवम् । रजः । पितुः । अप्रायि । धामभि रिति धाम = भिः ✱। दिवः । सदांऽसि । बृहती । वि । तिष्ठसे । आ । त्वेषम् । वर्तते । तमः ✱।।१।। उषः । तत् । चित्रम् । आ । भर । अस्मभ्यम् । वाजिनीवतीति वाजिनी = वति ✱। येन । तोकम् । च । तनयम् । च । धामहे ✱।।२।। प्रातर्जित मिति प्रातः = जितम् । भगम् । उग्रम् । हुवेम । वयम् । पुत्रम् । अदितेः । यः । विधर्तेतिवि = धर्ता ✱। आध्रः । चित् । यम् । मन्यमानः । तुरः । चित् । राजा । चित् । यम् । भगम् । भक्षि । इति । आह ✱।।३।। पूषन् । तव । व्रते । वयम् । न । रिष्येम । कदा । चन ✱। स्तोतारः । ते । इह । स्मसि ✱।।४।। ( पथस्पथः । पथः पथ इति पथः = पथः )। परिपति मिति परि = पतिम् । वचस्या । कामेन । कृतः । अभि । आनट् । अर्कम् ✱। सः । नः । रासत् । शुरुधः । चन्द्राग्रा इति चन्द्र = अग्राः । धियन्धिय मिति धियम् = धियम् । (सीषधाति । सीसधातीति सीसधाति )। प्र । पूषा ✱।।५।।

| | |
|---|---|
| 33.31.a | त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्य : । |
| 33.31.b | अतो धर्माणि धारयन् ।।६।। |
| 33.32.a | तद्विप्रासो विपन्यवो जागृवाꣳस : समिन्धते । |
| 33.32.b | विष्णोर्यत्परमं पदम् ।।७।। |
| 33.33.a | घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा । |
| 33.33.b | द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ।।८।। |
| 33.34.a | ये न : सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । |
| 33.34.b | वसवो रुद्रा आदित्या उपरिस्पृशम् मोग्रं चेत्तारमधिराजमक्रन् ।।९।। |
| 33.35.a | आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना । |
| 33.35.b | प्रायुस्तारिष्टं नी रपाꣳसि मृक्षतꣳ सेधतं द्वेषो भवतꣳ सचाभुवा।।१०।। |
| 33.36.a | एष व स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारो : । |
| 33.36.b | एषा यासीष्ट तन्वे वयाँ विद्यामेषँ वृजन ञ्जीरदानुम् ।।११।। |
| 33.37.a | सहस्तोमा : सहछन्दस आवृत : सहप्रमा ऋषय : सप्त दैव्या : । |
| 33.37.b | पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन् ।।१२।। |

त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपा : । अदाभ्य : *। अत : । धर्माणि । धारयन् *।।६।। तत् । विप्रास : । विपन्यव : । जागृवाꣳस इति जागृ = वाꣳस : । सम् । इन्धते *। विष्णो : । यत् । परमम् । पदम् *।।७।। घृतवती इति घृत = वती । भुवनानाम् । अभिश्रियेत्यभि = श्रिया । उर्वी इत्युर्वी । पृथ्वी इति पृथ्वी । मधुदुघे इति मधु = दुघे । सुपेश सेति सु = पेशसा *। द्यावापृथिवी इति द्यावापृथिवी । वरुणस्य । धर्मणा । (विष्कभिते । विस्कभिते इति वि = स्कभिते )। अजरे इत्यजरे । भूरिरेतसेति भूरि = रेतसा *।।८।। ये । न : । सपत्ना इति स = पत्ना : । अप । ते । भवन्तु । इन्द्राग्निभ्या मितीन्द्राग्नि = भ्याम् । अव । बाधामहे । तान् *। वसव : । रुद्रा : । आदित्या : । उपरिस्पृश मित्युपरि = स्पृशम् । मा । उग्रम् । चेत्तारम् । अधिराजमित्यधि = राजम् । अक्रन् *।।९।। आ । नासत्या । त्रिभिरिति त्रि = भि : । एकादशै : । इह । देवेभि : । यातम् । मधुपेय मिति मधु = पेयम् । अश्विना *। प्र । आयु : । तारिष्टम् । नि : । रपाꣳसि । मृक्षतम् । सेधतम् । द्वेष : । भवतम् । सचाभुवेति सचा = भुवा *।।१०।। एष : । व : । स्तोम : । मरुत : । इयम् । गी : । मान्दार्यस्य । मान्यस्य । कारो : *। आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरदानु मिति जीर = दानुम् *।।११।। सहस्तोमा इति सह = स्तोमा : । सहछन्दस इति सह = छन्दस : । आवृत इत्या = वृत : । सहप्रमा इति सह = प्रमा : । ऋषय : । सप्त । दैव्या : *। पूर्वेषाम् । पन्थाम् । अनुदृश्येत्यनु = दृश्य । धीरा : । अन्वालेभिर इत्यनु = आलेभिरे । रथ्य : । न । रश्मीन् *।।१२।।

| | |
|---|---|
| 33.38.a | आयुष्यँ वर्चस्य९ रायस्पोषमौद्भिदम् । |
| 33.38.b | इद९ हिरण्यँ वर्चस्वज्जैत्रायाविशतादु माम् ॥१३॥ |
| 33.39.a | न तद्रक्षा९सि न पिशाचास्तरन्ति देवानामोज : प्रथमज९ ह्येतत् । |
| 33.39.b | यो बिभर्ति दाक्षायण९ हिरण्य९ स देवेषु कृणुते दीर्घमायु : स मनुष्येषु कृणुते दीर्घमायु : ॥१४॥ |
| 33.40.a | यदाऽबध्नन्दाक्षायणा हिरण्य९ शतानीकाय सुमनस्यमाना : । |
| 33.40.b | तन्म आ बध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथाऽसम् ॥१५॥ |
| 33.41.a | उत नोऽहिर्बुध्न्य : शृणोत्वज एकपात्पृथिवी समुद्र : । |
| 33.41.b | विश्वे देवा ऋतावृधो हुवाना : स्तुता मन्त्रा : कविशस्ता अवन्तु॥१६॥ |
| 33.42.a | इमा गिर आदित्येभ्यो घृतस्नू : सनाद्राजभ्यो जुह्वा जुहोमि । |
| 33.42.b | शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अ९श : ॥१७॥ |
| 33.43.a | सप्त ऋषय : प्रतिहिता : शरीरे सप्त रक्षन्ति सदमप्रमादम् । |
| 33.43.b | सप्ताप : स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥१८॥ |
| 33.44.a | उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । |

आयुष्यम् । वर्चस्यम् । राय : । पोषम् । औद्भिदम् ✱। इदम् । हिरण्यम् । वर्चस्वत् । जैत्राय । आ । विशतात् । ॐ इत्यूँ । माम् ✱।।१३।। न । तत् । रक्षा॑ꣳसि । न । पिशाचा : । तरन्ति । देवानाम् । ओज : । प्रथमजमिति प्रथम = जम् । हि । एतत् ✱। य : । बिभर्ति । दाक्षायणम् । हिरण्यम् । स : । देवेषु । कृणुते । दीर्घम् । आयु : । स : । मनुष्येषु । कृणुते । दीर्घम् । आयु : ✱।।१४।। यत् । आ । अबध्नन् । दाक्षायणा : । हिरण्यम् । शतानीकायेति शत = अनीकाय । सुमनस्यमाना इति सु = मनस्यमाना : ✱। तत् । मे । आ । बध्नामि । शतशारदायेति शत = शारदाय । आयुष्मान् । जरदष्टि रिति जरत् = अष्टि : । यथा । असम् ✱।।१५।। उत । न : । अहि : । बुध्न्य : । शृणोतु । अज : । एकपा दित्येक = पात् । पृथिवी । समुद्र : ✱। विश्वे । देवा : । ( ऋतावृध : । ऋतवृध इत्यृत = वृध : )। हुवाना : । स्तुता : । मन्त्रा : । कविशस्ता इति कवि = शस्ता : । अवन्तु ✱।।१६।। इमा : । गिर : । आदित्येभ्य : । घृतस्नू रिति घृत = स्नू : । सनात् । राजभ्य इति राज = भ्य : । जुह्वा । जुहोमि ✱। शृणोतु । मित्र : । अर्यमा । भग : । न : । तुविजात इति तुवि = जात : । वरुण : । दक्ष : । अꣳश : ✱।।१७।। सप्त । ऋषय : । प्रतिहिता इति प्रति = हिता : । शरीरे । सप्त । रक्षन्ति । सदम् । अप्रमाद मित्यप्र = मादम् ✱। सप्त । आप : । स्वपत : । लोकम् । ईयु : । तत्र । जागृत : । अस्वप्नजा इत्यस्वप्न = जौ । सत्रसदा इति सत्र = सदौ । च । देवौ ✱।।१८।। उत् । तिष्ठ । ब्रह्मण : । पते । देवयन्त इति देव = यन्त : । त्वा । ईमहे ✱।

| | |
|---|---|
| 33.44.b | उप प्र यन्तु मरुत : सुदानव इन्द्र प्राशूर्भवा सचा ।।१९।। |
| 33.45.a | प्र नूनं ब्रह्मणस्पतिर्मन्त्रँ वदत्युक्थ्यम् । |
| 33.45.b | यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाꣳसि चिक्रिरे ।।२०।। |
| 33.46.a | ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च ज़िन्व । |
| 33.46.b | विश्वं तद्भद्रँ य्यदवन्ति देवा बृहद्वदेम विदथे सुवीरा : । |
| 33.46.c | य इमा विश्वा विश्वकर्मा यो न : पितान्नपतेऽन्नस्य नो देहि ।।२१।।(२) |

यज्ञाग्रत : पञ्चविंशति : ।।२५।। आरात्र्येकविंशति : ।।२१।। द्वयोरनुवाकयो : षट्चत्वारिंशत् ।।४६।।

**।। इति शुक्लयजु : काण्वसंहितायां त्रयस्त्रिंशोऽध्याय : ।।३३।।**

उप । प्र । यन्तु । मरुत : । सुदानव इति सु = दानव : । इन्द्र । प्राशू : । भव । सचा *।।१९।। प्र । नूनम् । ब्रह्मण : । पति : । मन्त्रम् । वदति । उक्थ्यम् *। यस्मिन् । इन्द्र : । वरुण : । मित्र : । अर्यमा । देवा : । ओकांश्सि । चक्रिरे *।।२०।। ब्रह्मण : । पते । त्वम् । अस्य । यन्ता । सूक्तस्येति सु = उक्तस्य । बोधि । तनयम् । च । जिन्व *। विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवा : । बृहत् । वदेम । विदथे । सुवीरा इति सु = वीरा : *। य : । इमा । विश्वा । विश्व कर्मेति विश्व = कर्मा । य : । न : । पिता । अन्नपत इत्यन्न = पते । अन्नस्य । न : । देहि ।।२१।।२।।३५३-११= ३४२।। आहत्य पद संख्या ।।७७०-३७=७३३।।

## इति त्रयस्त्रिंशोऽध्याय :

## ॥ इति त्रयस्त्रिंशोऽध्याय : ॥

| Adhyaya | 33 | | |
|---|---|---|---|
| **Anuvaka No.** | **Total Padas** | **Galitha Padas** | **Suddha Padas** |
| 1 | 417 | 26 | 391 |
| 2 | 353 | 11 | 342 |
| **Total** | **770** | **37** | **733** |

# ।। अथ चतुस्त्रिंशोऽध्याय : ।।

| | |
|---|---|
| 34.1.a | देव सवित : प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । |
| 34.1.b | दिव्यो गन्धर्वः केतपू : केतन्न : पुनातु वाचस्पति र्वाचन्नः स्वदतु।।१।। |
| 34.2.a | तत्सवितु र्वरेण्यं भर्गो देवस्य धीमहि । |
| 34.2.b | धियो यो न : प्रचोदयात् ।।२।। |
| 34.3.a | विश्वानि देव सवितर्दुरितानि परा सुव । |
| 34.3.b | यद्भद्रं तन्न आ सुव ।।३।। |
| 34.4.a | विभक्तार९ हवामहे वसोश्चित्रस्य राधस : । |
| 34.4.b | सवितारन् नृचक्षसम् ।।४।। |
| 34.5.a | ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यम् मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणम् । |
| 34.5.b | पाप्मने क्लीबमाक्रयाया अयोगूंकामाय पु९श्चलूमतिक्रुष्टायमागधम्।।५।। |
| 34.6.a | नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलम् । |
| 34.6.b | नर्माय रेभ९ हसाय कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम् ।।६।। |
| 34.7.a | तपसे कौलालं मायायै कर्मार९ रूपाय मणिकार९ शुभे वप९ शरव्याया इषुकार९ हेत्यै धनुष्कारम् । |

# अथ चतुस्त्रिंशोऽध्याय :

ॐ देव । सवित रिति सवित : । प्र । सुव । यज्ञम् । प्र । सुव । यज्ञपति मिति यज्ञ = पतिम् । भगाय ✱। दिव्य : । गन्धर्व : । केतपू रिति केत = पू : । केतम् । न : । पुनातु । वाच : । पति : । वाचम् । न : । स्वदतु ✱।।१।। तत् । सवितु : । वरेण्यम् । भर्ग : । देवस्य । धीमहि ✱। धिय : । य : । न : । प्रचोदया दिति प्र = चोदयात् ✱।।२।। विश्वानि । देव । सवित : । दुरितानीति दु : = इतानि । परा । सुव ✱। यत् । भद्रम् । तत् । न : । आ । सुव ✱।।३।। विभक्तारमिति वि = भक्तारम् । हवामहे । वसो : । चित्रस्य । राधस : ✱। सवितारम् । नृचक्षस मिति नृ = चक्षसम् ✱।।४।। ब्रह्मणे । ब्राह्मणम् । क्षत्राय । राजन्यम् । मरुद्भ्य इति मरुत् = भ्य : । वैश्यम् । तपसे । शूद्रम् । तमसे । तस्करम् । नारकाय ।( वीरहणम् । वीरहन मिति वीर = हनम् )। पाप्मने । क्लीबम् । आक्रयाया इत्या = क्रयायै । अयोगूम् । कामाय । पुंश्चलूम् । अतिक्रुष्टायेत्यति = क्रुष्टाय । मागधम् ✱।।५।। नृत्ताय । सूतम् । गीताय । शैलूषम् । धर्माय । सभाचरमिति सभा = चरम् । नरिष्ठायै । भीमलम् । नर्माय । रेभम् । हसाय । कारिम् । आनन्दायेत्या = नन्दाय । (स्त्रीषखम् । स्त्रीसखमिति स्त्री = सखम् )। प्रमद इति प्र = मदे । कुमारीपुत्रमिति कुमारी = पुत्रम् । मेधायै । रथकारमिति रथ = कारम् । धैर्याय । तक्षाणम् ✱।।६।। तपसे । कौलालम् । मायायै । कर्मारम् । रूपाय । मणिकार मिति मणि = कारम् । शुभे । वपम् । शरव्यायै । इषुकारमितीषु = कारम् । हेत्यै ।( धनुष्कारम् । धनु : कारमिति धनु : = कारम् )।

| | |
|---|---|
| 34.7.b | कर्मणे ज्याकारं दिष्टाय रज्जुसर्जम् मृत्यवे मृगयुमन्तकाय श्वनिनम् ॥७॥ |
| 34.8.a | नदीभ्य : पौञ्जिष्टमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदङ् गन्धर्वाप्सरोभ्यो व्रात्यम् । |
| 34.8.b | प्रयुग्भ्य उन्मत्तꣳ सर्पदेवजनेभ्योऽप्रतिपदमयेभ्य : कितवमीर्यताया अकितवं पिशाचेभ्यो बिदलकारीँ य्यातुधानेभ्य : कण्टकीकारीम् ॥८॥ (१) |

| | |
|---|---|
| 34.9.a | सन्धये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराध्या एदिधिषु : पतिं न्निष्कृत्यै पेशस्कारीꣳ सञ्ज्ञानाय स्मरकारीम् । |
| 34.9.b | प्रकामोद्यायोपसदँ वर्णायानुरुधं बलायोपदाम् ॥९॥ |
| 34.10.a | उत्सादेभ्य : कुब्जं प्रमुदे वामनं द्वार्भ्य : स्रामꣳ स्वप्नायान्धमधर्माय बधिरं पवित्राय भिषजम् । |

कर्मणे । ज्याकारमिति ज्या = कारम् । दिष्टाय । रज्जुसर्जमिति रज्जु = सर्जम् । मृत्यवे । मृगयुमिति मृग = युम् । अन्तकाय । श्वनिनमिति श्व = निनम् *।।७।। नदीभ्य : । पौञ्जिष्टम् । ऋक्षीकाभ्य : । (नैषादम् । नैसादमिति नैसादम् )। पुरुषव्याघ्रायेति पुरुष = व्याघ्राय । दुर्मदमिति दु : = मदम् । गन्धर्वाप्सरोभ्य इति गन्धर्वाप्सर : = भ्य : । व्रात्यम् । प्रयुग्भ्य इति प्रयुक् = भ्य : । उन्मत्त मित्युत् = मत्तम् । सर्पदेवजनेभ्य इति सर्प = देवजनेभ्य : । अप्रतिपद मित्यप्रति = पदम् । अयेभ्य : । कितवम् । ईर्यतायै । अकितवम् । पिशाचेभ्य : । बिदलकारी मिति बिदल = कारीम् । यातुधानेभ्य इति यातु = धानेभ्य : । कण्टकीकारी मिति कण्टकी = कारीम् *।।८।।१।।१२९-३०=९९।।

सन्धय इति सं = धये । जारम् । गेहाय । उपपतिमित्युप = पतिम् । आर्त्या इत्या = ऋत्यै । परिवित्त मिति परि = वित्तम् । निर्ऋत्या इति नि : = ऋत्यै । परिविविदान मिति परि = विविदानम् । अराध्यै । एदिधिषु : पतिमित्ये दिधिषु : = पतिम् । (निष्कृत्यै । नि : कृत्या इति नि : = कृत्यै )। (पेशस्कारीम् । पेश : कारीमिति पेश : = कारीम् )। सञ्ज्ञानायेति सं = ज्ञानाय । स्मरकारीमिति स्मर = कारीम् । प्रकामोद्यायेति प्रकाम = उद्याय । उपसद मित्युप = सदम् । वर्णाय । अनुरुध मित्यनु = रुधम् । बलाय । उपदामित्युप = दाम् *।।१।। उत्सादेभ्य इत्युत् = सादेभ्य : । कुब्जम् । प्रमुद इति प्र = मुदे । वामनम् । द्वार्भ्य इति द्वा : = भ्य : । स्रामम् । स्वप्नाय । अन्धम् । अधर्माय । बधिरम् । पवित्राय । भिषजम् ।

| | |
|---|---|
| 34.10.b | प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनम् मर्यादायै प्रश्नविवाकम् ॥२॥ |
| 34.11.a | अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालँ वीर्यायाविपालं तेजसेऽजपालमिरायै कीनाशम् । |
| 34.11.b | कीलालाय सुराकारं भद्राय गृहपᳪ श्रेयसे वित्तधमाध्यक्षायानुक्षत्तारम्॥३॥ |
| 34.12.a | भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारँ वर्षिष्ठाय नाकाय परिवेष्टारम् । |
| 34.12.b | देवलोकाय पेशितारम् मनुष्यलोकाय प्रकरितारᳪ सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायोपमन्थितारं मेधाय वास : पल्पूलीम् प्रकामाय रजयित्रीम् ॥४॥ |
| 34.13.a | ऋतये स्तेनहृदयँ वैरहत्याय पिशुनँ विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दम् । |
| 34.13.b | प्रियाय प्रियवादिनमरिष्ट्या अश्वसादᳪ स्वर्गाय लोकाय भागदुघँ वर्षिष्ठाय नाकाय परिवेष्टारम् ॥५॥(२) |

प्रज्ञानायेति प्र = ज्ञानाय । नक्षत्रदर्शमिति नक्षत्र = दर्शम् । आशिक्षाया इत्या = शिक्षायै । प्रश्निनम् । उपशिक्षाया इत्युप = शिक्षायै । अभिप्रश्निन मित्यभि = प्रश्निनम् । मर्यादायै । प्रश्नविवाकमिति प्रश्न = विवाकम् *॥२॥ अर्मेभ्य : । हस्तिपमिति हस्ति = पम् । जवाय । अश्वपमित्यश्व = पम् । पुष्ट्यै । गोपालमिति गो = पालम् । वीर्याय । अविपालमित्यवि = पालम् । तेजसे । अजपालमित्यज = पालम् । इरायै । कीनाशम् । कीलालाय । सुराकारमिति सुरा = कारम् । भद्राय । गृहपमिति गृह = पम् । श्रेयसे । वित्तधमिति वित्त = धम् । आध्यक्षायेत्याधि = अक्षाय । अनुक्षत्तार मित्यनु = क्षत्तारम् *॥३॥ भायै । दार्वाहारमिति दारु = आहारम् । प्रभाया इति प्र = भायै । अग्न्येध मित्यग्नि = एधम् । ब्रध्नस्य । विष्टपाय । (अभिषेक्तारम् । अभिसेक्तार मित्यभि = सेक्तारम्)। वर्षिष्ठाय । नाकाय । परिवेष्टार मिति परि = वेष्टारम् । देवलोकायेति देव = लोकाय । पेशितारम् । मनुष्यलोकायेति मनुष्य = लोकाय । प्रकरितार मिति प्र = करितारम् । सर्वेभ्य : । लोकेभ्य : । उपसेक्तार मित्युप = सेक्तारम् । अवऋत्या इत्यव = ऋत्यै । वधाय । उपमन्थितार मित्युप = मन्थितारम् । मेधाय । वास : पल्पूलीमिति वास : = पल्पूलीम् । प्रकामायेति प्र = कामाय । रजयित्रीम् *॥४॥ ऋतये । स्तेनहृदय मिति स्तेन = हृदयम् । वैरहत्यायेति वैर = हत्याय । पिशुनम् । विविक्त्या इति वि = विक्त्यै । क्षत्तारम् । औपद्रष्ट्र्यायेत्यौप = द्रष्ट्र्याय । अनुक्षत्तार मित्यनु = क्षत्तारम् । बलाय । अनुचरमित्यनु = चरम् । भूम्ने । (परिष्कन्दम् । परिस्कन्दमिति परि = स्कन्दम् )। प्रियाय । प्रियवादिन मिति प्रिय = वादिनम् । अरिष्ट्यै । अश्वसादमित्यश्व = सादम् ।

| | |
|---|---|
| 34.14.a | मन्यवेऽयस्तापं क्रोधाय निसरँ य्योगाय योक्तारꣳ शोकायाभिसर्तारं क्षेमाय विमोक्तार मुत्कूलनिकूलेभ्यस्त्रिष्ठिनम् । |
| 34.14.b | वपुषे मानस्कृतꣳ शीलायाञ्जनीकारीन् निर्ऋत्यै कोशकारीँ य्यमायासूम् ।।१।। |
| 34.15.a | यमाय यमसूमथर्वभ्योऽवतोकाꣳ सँवत्सराय पर्यायिणीम् परिवत्सराया विजातामिदावत्सराया तीत्वरीमिद्वत्सरायातिष्कद्वरीम् । |
| 34.15.b | वत्सराय विजर्जराꣳ सँवत्सराय पलिक्नीमृभुभ्यो ऽजिनसन्धꣳ साध्येभ्यश्चर्मम्नम् ।।२।। |
| 34.16.a | सरोभ्यो धैवरमुपस्थावराभ्यो दाशँ वैशन्ताभ्यो बैन्दं नड्वलाभ्यः शौष्कलम् । |
| 34.16. b | पाराय मार्गारमवाराय केवर्तन् तीर्थेभ्य आन्दँ विषमेभ्यो मैनालम् । |
| 34.16.c | स्वनेभ्य : पर्णकं गुहाभ्य : किरातꣳ सानुभ्यो जम्भकं पर्वतेभ्य : किम्पूरुषम् ।।३।। |

स्वर्गायेति स्व : = गाय । लोकाय । भागदुघमिति भाग = दुघम् । वर्षिष्ठाय । नाकाय । परिवेष्ठार मिति परि = वेष्ठारम् *।।५।।२।।१०६-०=१०६।।

मन्यवे । अयस्तापमित्यय : = तापम् । क्रोधाय । निसरमिति नि = सरम् । योगाय । योक्तारम् । शोकाय । अभिसर्तार मित्यभि = सर्तारम् । क्षेमाय । विमोक्तार मिति वि = मोक्तारम् । उत्कूलनिकूलेभ्य इत्युत्कूल = निकूलेभ्य : ।( त्रिष्ठिनन् । त्रिस्थिन मिति त्रि = स्थिनम् )। वपुषे ।( मानस्कृतम् । मान : कृत मिति मानः = कृतम् )। शीलाय । अञ्जनीकारीमित्याञ्जनी = कारीम् । निर्ऋत्या इति नि : = ऋत्यै । कोशकारी मिति कोश = कारीम्। यमाय । असूम् *।।१।। यमाय । यमसूमिति यम = सूम् । अथर्वभ्य इत्यथर्व = भ्य : । अवतोका मित्यव = तोकाम् । सँवत्सराय ।( पर्यायिणीम् । पर्यायिनी मिति परि = आयिनीम् )। परिवत्सरायेति परि = वत्सराय । अविजाता मित्यवि = जाताम् । इदावत्सराय । अतीत्वरी मित्यति = इत्वरीम् । इद्वत्सरायेतीत् = वत्सराय ।( अतिष्कद्वरीम् । अतिस्कद्वरी मित्यति = स्कद्वरीम् )। वत्सराय । विजर्जरा मिति वि = जर्जराम् । सँवत्सराय । पलिक्नीम् । ऋभुभ्य इत्यृभु = भ्य : । अजिनसन्धमित्य जिन = सन्धम् । साध्येभ्य : । चर्मम्नमिति चर्म = म्नम् *।।२।। सरोभ्य इति सर : = भ्य : । धैवरम् । उपस्थावराभ्य इत्युप = स्थावराभ्य : । दाशम् । वैशन्ताभ्य : । बैन्दम् । नड्वलाभ्य : । शौष्कलम् । पाराय । मार्गारम् । अवाराय । केवर्तम् । तीर्थेभ्य : । आन्दम् ।( विषमेभ्य : । विसमेभ्य इति वि = समेभ्य : )। मैनालम् । स्वनेभ्य : । पर्णकम् । गुहाभ्य : । किरातम् । सानुभ्य इति सानु = भ्य : । जंभकम् । पर्वतेभ्य : ।( किम्पूरुषम् । किम्पुरुषमिति किम् = पुरुषम् )*।।३।।

| | |
|---|---|
| 34.17.a | बीभत्सायै पौल्कसँ वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चादोषाय ग्लाविनँ विश्वेभ्यो भूतेभ्य : सिध्मलम् । |
| 34.17.b | भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनँ व्यृद्ध्या अपगल्भꣳ सꣳशराय प्रच्छिदम् ॥४॥ |
| 34.18.a | अक्षराजाय कितवं कृतायादिनवदर्शन् त्रेतायै कल्पिनन् द्वापरायाधि कल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातम् । |
| 34.18.b | क्षुधे यो गाँ विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यम् पाप्मने सैलगम् ॥५॥(३) |

| | |
|---|---|
| 34.19.a | प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ शब्दायाळम्बराघातम् । |
| 34.19.b | महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मँ वनाय वनपमन्यतोऽरण्याय दावपम् ॥१॥ |

बीभत्सायै । पौल्कसम् । वर्णाय । हिरण्यकार मिति हिरण्य = कारम् । तुलायै । वाणिजम् । पश्चादोषायेति पश्चा = दोषाय । ग्लाविनम् । विश्वेभ्य : । भूतेभ्य : । सिध्मलम् । भूत्यै । जागरणम् । अभूत्यै । स्वपनम् । आर्त्या इत्या = ऋत्यै । जनवादिन मिति जन = वादिनम् । व्यृद्ध्या इति वि = ऋद्ध्यै । अपगल्भमित्यप = गल्भम् । सꣳशरायेति सं = शराय । प्रच्छिद मिति प्र = छिदम् *।।४।। अक्षराजायेत्यक्ष = राजाय । कितवम् । कृताय । आदिनवदर्शमित्या दिनव = दर्शम् । त्रेतायै । कल्पिनम् । द्वापराय । अधिकल्पिन मित्यधि = कल्पिनम् । आस्कन्दायेत्या = स्कन्दाय । सभास्थाणुमिति सभा = स्थाणुम् । मृत्यवे । गोव्यच्छमिति गो = व्यच्छम् । अन्तकाय । गोघातमिति गो = घातम् । क्षुधे । य : । गाम् । विकृन्तन्त मिति वि = कृन्तन्तम् । भिक्षमाण : । उपतिष्ठतीत्युप = तिष्ठति ।( दुष्कृताय । दु : कृतायेति दु : - कृताय )। चरकाचार्य मिति चरक = आचार्यम् । पाप्मने । सैलगम् *।।५।।३।।१०९-०=१०९।।

प्रतिश्रुत्काया इति प्रति = श्रुत्कायै । अर्तनम् । घोषाय । भषम् । अन्ताय । बहुवादिन मिति बहु = वादिनम् । अनन्ताय । मूकम् । शब्दाय । आळंबराघातमित्या ळंबर = आघातम् । महसे । वीणावादमिति वीणा = वादम् । क्रोशाय । तूणवध्ममिति तूणव = ध्मम् । (अवरस्पराय । अवरपरायेत्य वर = पराय )। शङ्खध्ममिति शङ्ख = ध्मम् । वनाय । वनपमिति वन = पम् । अन्यतो रण्यायेत्यन्यत : = अरण्याय । दावपमिति दाव = पम् *।।१।।

| | |
|---|---|
| 34.20.a | नर्माय पुंश्चलूं हसाय कारिं य्यादसे शाबल्यां ग्रामण्यं गणकमभिक्रोशकं तान्महसे । |
| 34.20.b | वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्तायानन्दाय तलवम् ॥२॥ |
| 34.21.a | अग्नये पीवानं पृथिव्यै पीठसर्पिणं वायवे चाण्डालमन्तरिक्षाय वंशनर्तिनन् दिवे खलतिं सूर्याय हर्यक्षम् । |
| 34.21.b | नक्षत्रेभ्य : किर्मिरं चन्द्रमसे किलासमह्ने शुक्लं पिङ्गाक्षं रात्र्यै कृष्णं पिङ्गाक्षम् ॥३॥ |
| 34.22.a | अथैतानष्टौ विरूपाना लभतेऽतिशुक्लं चातिकृष्णं चातिदीर्घञ् चातिह्रस्वं च । |
| 34.22.b | अतिस्थूलं चातिकृशं चातिकूल्वं चातिलोमशं चाशूद्रा अब्राह्मणास्ते प्राजापत्या : । |
| 34.22.c | मागध : पुंश्चली क्लीब : कितवोऽशूद्रा अब्राह्मणास्ते प्राजापत्या : ॥४॥(४) |

देव सवितरष्ट ॥८॥ सन्धये जारं पञ्च ॥५॥ मन्यवे पञ्च ॥५॥ प्रतिश्रुत्कायै चतस्र : ॥४॥ चतुरनुवाकेषु द्वाविंशति ॥२२॥

॥ इति शुक्लयजु : काण्वसंहितायां चतुस्त्रिंशोऽध्याय : ॥३४॥

नर्माय । पुं॒श्चलूम् । हसाय । कारिम् । यादसे । शाबल्याम् ।( ग्रामण्यम् । ग्रामन्यमिति ग्राम = न्यम् )। गणकम् । अभिक्रोशक मित्यभि = क्रोशकम् । तान् । महसे । वीणावादमिति वीणा = वादम् । पाणिघ्नमिति पाणि = घ्नम् । तूणवध्ममिति तूणव = ध्मम् । तान् । नृत्ताय । आनन्दायेत्या = नन्दाय । तलवम् *।।२।। अग्नये । पीवानम् । पृथिव्यै । पीठसर्पिण मिति पीठ = सर्पिणम् । वायवे । चाण्डालम् । अन्तरिक्षाय । वं॒शनर्तिन मिति वं॒श = नर्तिनम् । दिवे । खलतिम् । सूर्याय । हर्यक्षमिति हरि = अक्षम् । नक्षत्रेभ्य : । किर्मिरम् । चन्द्रमसे । किलासम् । अन्हे । शुक्लम् । पिङ्गाक्षमिति पिङ्ग = अक्षम् । रात्र्यै । कृष्णम् । पिङ्गाक्षमिति पिङ्ग = अक्षम् *।।३।। अथ । एतान् । अष्टौ । विरूपा निति वि = रूपान् । आ । लभते । अतिशुक्ल मित्यति = शुक्लम् । च । अतिकृष्ण मित्यति = कृष्णम् । च । अतिदीर्घ मित्यति = दीर्घम् । च । अतिह्रस्व मित्यति = ह्रस्वम् । च । अतिस्थूल मित्यति = स्थूलम् । च । अतिकृश मित्यति = कृशम् । च । अतिकूल्व मित्यति = कूल्वम् । च । अतिलोमश मित्यति = लोमशम् । च । अशूद्रा : । अब्राह्मणा : । ते । प्राजापत्या इति प्राजा = पत्या : । मागध : । पुं॒श्चली । क्लीब : । कितव : । अशूद्रा : । अब्राह्मणा : । ते । प्राजापत्या इति प्राजा = पत्या : *।।४।।४।।९४-७=८७।। **आहत्य पद संख्या ।।४३८-३७=४०१।।**

## इति चतुस्त्रिंशोऽध्याय :

# ।। इति चतुस्त्रिंशोऽध्याय : ।।

| Adhyaya | 34 | | |
|---|---|---|---|
| Anuvaka No. | Total Padas | Galitha Padas | Suddha Padas |
| 1 | 129 | 30 | 99 |
| 2 | 106 | 0 | 106 |
| 3 | 109 | 0 | 109 |
| 4 | 94 | 7 | 87 |
| Total | 438 | 37 | 401 |

# अथ पञ्चत्रिंशोऽध्याय :

| | |
|---|---|
| 35.1.a | सहस्रशीर्षा पुरुष : सहस्राक्ष : सहस्रपात् । |
| 35.1.b | स भूमिँ सर्वत : स्पृत्वाऽत्यतिष्ठद् दशाङ्गुलम् ।।१।। |
| 35.2.a | पुरुष एवेदँ सर्वं य्यद् भूतँ य्यच्च भाव्यम् । |
| 35.2.b | उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।२।। |
| 35.3.a | एतावानस्य महिमाऽतो ज्यायाँश्च पूरुष : । |
| 35.3.b | पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन् दिवि ।।३।। |
| 35.4.a | त्रिपादूर्ध्व उदैत्पुरुष : पादोऽस्येहाभवत्पुन : । |
| 35.4.b | ततो विष्वङ् व्यक्रामत्साशनानशने अभि ।।४।। |
| 35.5.a | ततो विराळजायत विराजो अधि पूरुष : । |
| 35.5.b | स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुर : ।।५।। |
| 35.6.a | तस्माद् यज्ञात्सर्वहुत : सम्भृतं पृषदाज्यम् । |
| 35.6.b | पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ।।६।। |
| 35.7.a | तस्माद् यज्ञात्सर्वहुत ऋच : सामानि जज्ञिरे । |
| 35.7.b | छन्दाँसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ।।७।। |
| 35.8.a | तस्मादश्वा अजायन्त ये के चोभयादत : । |
| 35.8.b | गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावय : ।।८।। |

# अथ पञ्चत्रिंशोऽध्याय :

ॐ सहस्रशीर्षेति सहस्र = शीर्षा । पुरुष : । सहस्राक्ष इति सहस्र = अक्ष : । सहस्रपादिति सहस्र = पात् *। स : । भूमिम् । सर्वत : । स्पृत्वा । अति । अतिष्ठत् । दशाङ्गुलमिति दश = अङ्गुलम् *।।१।। पुरुष : । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भाव्यम् *। उत । अमृतत्वस्येत्य मृत = त्वस्य । ईशान : । यत् । अन्नेन । अतिरोहतीत्यति = रोहति *।।२।। एतावान् । अस्य । महिमा । अत : । ज्यायान् । च ।( पूरुष : । पुरुष इति पुरुष : )*। पाद : । अस्य । विश्वा । भूतानि । त्रिपादिति त्रि = पात् । अस्य । अमृतम् । दिवि *।।३।। त्रिपादिति त्रि = पात् । ऊर्ध्व : । उत् । ऐत् । पुरुष : । पाद : । अस्य । इह । अभवत् । पुन रिति पुन : *। तत : । विष्वङ् । वि । अक्रामत् । साशनानशने इति साशनानशने । अभि *।।४।। तत : । विराळिति वि = राट् । अजायत । विराज इति वि = राज : । अधि ।( पूरुष : । पुरुष इति पुरुष : )*। स : । जात : । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इत्यथो । पुर : *।।५।। तस्मात् । यज्ञात् । सर्वहुत इति सर्व = हुत : । संभृत मिति सं = भृतम् । पृषदाज्यमिति पृषत् = आज्यम् *। पशून् । तान् । चक्रे । वायव्यान् । आरण्या : । ग्राम्या : । च । ये *।।६।। तस्मात् । यज्ञात् । सर्वहुत इति सर्व = हुत : । ऋच : । सामानि । जज्ञिरे *। छन्दा॑ꣳसि । जज्ञिरे । तस्मात् । यजु : । तस्मात् । अजायत *।।७।। तस्मात् । अश्वा : । अजायन्त । ये । के । च ।( उभयादत : । उभयदत इत्युभय = दत : )*। गाव : । ह । जज्ञिरे । तस्मात् । तस्मात् । जाता : । अजावय : *।।८।।

| | |
|---|---|
| 35.9.a | तँ य्यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रत : । |
| 35.9.b | तेन देवा अयजन्त साध्या ऋषयश्च ये ।।९।। |
| 35.10.a | यत्पुरुषँ व्यदधु : कतिधा व्यकल्पयन् । |
| 35.10.b | मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते ।।१०।। |
| 35.11.a | ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्य : कृत : । |
| 35.11.b | ऊरू तदस्य यद् वैश्य : पद्भ्याꣳ शूद्रो अजायत ।।११।। |
| 35.12.a | चन्द्रमा मनसो जातश्चक्षो : सूर्यो अजायत । |
| 35.12.b | श्रोत्राद् वायुश्च प्राणश्च मुखादग्नि रजायत ।।१२।। |
| 35.13.a | नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौ : समवर्तत । |
| 35.13.b | पद्भ्यां भूमिर्दिश : श्रोत्रात् तथा लोकाँ (२) - अकल्पयन् ।।१३।। |
| 35.14.a | यत्पुरुषेण हविषा देवा यज्ञमतन्वत । |
| 35.14.b | वसन्तोऽस्यासीदाज्यङ् ग्रीष्म इध्म : शरद्धवि : ।।१४।। |
| 35.15.a | सप्तास्यासन् परिधयस्त्रि : सप्त समिध : कृता : । |
| 35.15.b | देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ।।१५।। |
| 35.16.a | यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । |
| 35.16.b | ते ह नाकम् महिमान : सचन्त यत्र पूर्वे साध्या : सन्ति देवा : ।।१६।।(१) |

तम् । यज्ञम् । बर्हिषि । प्र । औक्षन् । पुरुषम् । जातम् । अग्रत : ✱। तेन । देवा : । अयजन्त । साध्या : । ऋषय : । च । ये ✱।।९।। यत् । पुरुषम् । वि । अदधु : । कतिधा । वि । अकल्पयन् ✱। मुखम् । किम् । अस्य । आसीत् । किम् । बाहू इति बाहू । किम् । ऊरू इत्यूरू । पादौ । उच्येते इत्युच्येते ✱।।१०।। ब्राह्मण : । अस्य । मुखम् । आसीत् । बाहू इति बाहू । राजन्य : । कृत : ✱। ऊरू इत्यूरू । तत् । अस्य । यत् । वैश्य : । पद्भ्यामिति पत् = भ्याम् । शूद्र : । अजायत ✱।।११।। चन्द्रमा : । मनस : । जात : । चक्षो : । सूर्य : । अजायत ✱। श्रोत्रात् । वायु : । च । प्राण : । च । मुखात् । अग्नि : । अजायत ✱।।१२।। नाभ्या : । आसीत् । अन्तरिक्षम् । शीर्ष्ण : । द्यौ : । सम् । अवर्तत ✱। पद्भ्यामिति पत् = भ्याम् । भूमि : । दिश : । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ✱।।१३।। यत् । पुरुषेण । हविषा । देवा : । यज्ञम् । अतन्वत ✱। वसन्त : । अस्य । आसीत् । आज्यम् । ग्रीष्म : । इध्मः । शरत् । हवि : ✱।।१४।। सप्त । अस्य । आसन् । परिधय इति परि = धय : । त्रि : । सप्त । समिध इति सं = इध : । कृता : ✱। देवा : । यत् । यज्ञम् । तन्वाना : । अबध्नन् । पुरुषम् । पशुम् ✱।।१५।। यज्ञेन । यज्ञम् । अयजन्त । देवा : । तानि । धर्माणि । प्रथमानि । आसन् ✱। ते । ह । नाकम् । महिमान : । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवा : ✱।।१६।।१।।२३२-२=२३०।।

| | |
|---|---|
| 35.17.a | अद्भ्य : संभृत : पृथिव्यै रसाच्च विश्वकर्मण : समवर्तताग्रे । |
| 35.17.b | तस्य त्वष्टा विदधद् रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१॥ |
| 35.18.a | वेदाहमेतं पुरुषं महान्तमादित्यवर्णन् तमस : परस्तात् । |
| 35.18.b | तमेव विदित्वाऽति मृत्युमेति नान्य : पन्था विद्यतेऽयनाय ॥२॥ |
| 35.19.a | प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते । |
| 35.19.b | तस्य योनिं परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥३॥ |
| 35.20.a | यो देवेभ्य आतपति यो देवानाम् पुरोहित : । |
| 35.20.b | पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥४॥ |
| 35.21.a | रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् । |
| 35.21.b | यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥५॥ |
| 35.22.a | श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । |
| 35.22.b | इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥६॥(२) |

| | |
|---|---|
| 35.23.a | तदेवाग्नि स्तदादित्यस्तद् वायु स्तदु चन्द्रमा : । |
| 35.23.b | तदेव शुक्रं तद् ब्रह्म तदाप स्तत्प्रजापति : ॥१॥ |

अद्भ्य इत्यत् = भ्य : । संभृत इति सं = भृत : । पृथिव्यै । रसात् । च । विश्वकर्मण इति विश्व = कर्मण : । सम् । अवर्तत । अग्रे *। तस्य । त्वष्टा । विदध दिति वि = दधत् । रूपम् । एति । तत् । मर्त्यस्य । देवत्वमिति देव = त्वम् । आजान मित्या = जानम् । अग्रे *।।१।। वेद । अहम् । एतम् । पुरुषम् । महान्तम् । आदित्यवर्ण मित्या दित्य = वर्णम् । तमस : । परस्तात् *। तम् । एव । विदित्वा । अति । मृत्युम् । एति । न । अन्य : । पन्था : । विद्यते । अयनाय *।।२।। प्रजापति रिति प्रजा = पति : । चरति । गर्भे । अन्त : । अजायमान : । बहुधा । वि । जायते *। तस्य । योनिम् । परि । पश्यन्ति । धीरा : । तस्मिन् । ह । तस्थु : । भुवनानि । विश्वा *।।३।। य : । देवेभ्य : । आतपतीत्या = तपति । य : । देवानाम् । पुरोहित इति पुर : = हित : *। पूर्व : । य : । देवेभ्य : । जात : । नम : । रुचाय । ब्राह्मये *।।४।। रुचम् । ब्राह्मम् । जनयन्त : । देवा : । अग्रे । तत् । अब्रुवन् *। य : । त्वा । एवम् । ब्राह्मण : । विद्यात् । तस्य । देवा : । असन् । वशे *।।५।। श्री : । च । ते । लक्ष्मी : । च । पत्न्यौ । अहोरात्रे इत्य होरात्रे । पार्श्वे इति पार्श्वे । नक्षत्राणि । रूपम् । अश्विनौ । व्यात्त मिति वि = आत्तम् *। इष्णन् । इषाण । अमुम् । मे । इषाण । सर्वलोकमिति सर्व = लोकम् । मे । इषाण *।।६।।२।।१०५-०=१०५।।

तत् । एव । अग्नि : । तत् । आदित्य : । तत् । वायु : । तत् । ॐ इत्यूँ । चन्द्रमा : *। तत् । एव । शुक्रम् । तत् । ब्रह्म । तत् । आप : । तत् । प्रजापति रिति प्रजा = पति : *।।१।।

| | |
|---|---|
| 35.24.a | सर्वे निमेषा जज्ञिरे विद्युत : पुरुषा दधि । |
| 35.24.b | नैनं मूर्ध्वन्न तिर्यञ्च न्न मध्ये परि जग्रभत् ॥२॥ |
| 35.25.a | न तस्य प्रतिमा अस्ति यस्य नाम महद्यश : । |
| 35.25.b | हिरण्यगर्भ इत्येष : ॥३॥ |
| 35.26.a | एषो ह देव : प्रदिशोऽनु सर्वा : पूर्वो ह जात : स उ गर्भे अन्त : । |
| 35.26.b | स एव जात : स जनिष्यमाण : प्रत्यङ् जनास्तिष्ठति सर्वतोमुख : । |
| 35.26.c | यस्मान्न जात इत्येष : ॥४॥ |
| 35.27.a | वेनस्तत्पश्यन् निहितं गुहा सद्यत्र विश्वं भवत्येकनीळम् । |
| 35.27.b | तस्मिन्निद९ सं च वि चैति सर्व९स ओत : प्रोतश्च विभूःप्रजासु॥५॥ |
| 35.28.a | प्र तद्वोचेदमृतं नु विद्वान् गन्धर्वो धाम विभृतं गुहा सत् । |
| 35.28.b | त्रीणि पदानि निहिता गुहाऽऽस्य यस्तानि वेद स पितु : पितासत् ॥६॥ |
| 35.29.a | स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा । |
| 35.29.b | यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥७॥ |
| 35.30.a | परीत्य भूतानि परीत्य लोकान्परीत्य सर्वा : प्रदिशो दिशश्च । |
| 35.30.b | उपस्थाय प्रथमजा मृतस्यात्मनाऽऽत्मानमभि सँ विवेश ॥८॥ |

सर्वे । निमेषा इति नि = मेषा : । जज्ञिरे । विद्युत इति वि = द्युत : । पुरुषात् । अधि ✱। न । एनम् । ऊर्ध्वम् । न । तिर्यञ्चम् । न । मध्ये । परि । जग्रभत् ✱।।२।। न । तस्य । प्रतिमेति प्रति = मा । अस्ति । यस्य । नाम । महत् । यश : ✱। हिरण्यगर्भ : । इति । एष : ।।३।। एष : । ह । देव : । प्रदिश इति प्र = दिश : । अनु । सर्वा : । पूर्व : । ह । जात : । स : । ऊँ इत्यूँ । गर्भे । अन्तरित्यन्त : ✱। स : । एव । जात : । स : । जनिष्यमाण : । प्रत्यङ् । जना : । तिष्ठति । सर्वतोमुख इति सर्वत : = मुख :✱। यस्मात् । न । जात : । इति । एष : ।।४।। वेन : । तत् । पश्यत् । निहित मिति नि = हितम् । गुहा । सत् । यत्र । विश्वम् । भवति । एकनीळ मित्येक = नीळम् ✱। तस्मिन् । इदम् । सम् । च । वि । च । एति । सर्वम् । स : । ओत इत्या = उत : । प्रोत इति प्र = उत : । च । विभू रिति वि = भू : । प्रजास्विति प्र = जासु ✱।।५।। प्र । तत् । वोचेत् । अमृतम् । नु । विद्वान् । गन्धर्वः । धाम । विभृत मिति वि = भृतम् । गुहा । सत् ✱। त्रीणि । पदानि । निहितेति नि = हिता । गुहा । आ । अस्य । य :। तानि । वेद । स :। पितु :। पिता । असत् ✱।।६।। स : । न : । बन्धु : । जनिता । स : । विधातेति वि = धाता । धामानि । वेद । भुवनानि । विश्वा ✱। यत्र । देवा : । अमृतम् । आनशाना : । तृतीये । धामन् । अध्यैरयन्तेत्यधि = ऐरयन्त ✱।।७।। परीत्येति परि = इत्य । भूतानि । परीत्येति परि = इत्य । लोकान् । परीत्येति परि = इत्य । सर्वा : । प्रदिश इति प्र = दिश : । दिश : । च ✱। उपस्थायेत्युप = स्थाय । प्रथमजा मिति प्रथम = जाम् । ऋतस्य । आत्मना । आत्मानम् । अभि । सम् । विवेश ✱।।८।।

| | |
|---|---|
| 35.31.a | परि द्यावापृथिवी सद्य इत्वा परि लोकान्परि दिश : परि स्व : । |
| 35.31.b | ऋतस्य तन्तुँ विततँ विचृत्य तदपश्य त्तदभव त्तदासीत् ।।९।। |
| 35.32.a | सदसस्पति मद्भुतं प्रियमिन्द्रस्य काम्यम् । |
| 35.32.b | सनिं मेधा मयासिषऌ स्वाहा ।।१०।। |
| 35.33.a | यां मेधां देवगणा : पितरश्चोपासते । |
| 35.33.b | तया मामद्य मेधयाऽग्ने मेधाविनं कुरु स्वाहा ।।११।। |
| 35.34.a | इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् । |
| 35.34.b | मयि देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा ।।१२।।(३) |

| | |
|---|---|
| 35.35.a | अपेतो यन्तु पणयोऽसुम्ना देवपीयव: । |
| 35.35.b | अस्य लोक : सुतावत : ।।१।। |
| 35.36.a | द्युभिरहोभिरक्तुभिर्व्यक्तँ य्यमो ददात्ववसानमस्मै । |
| 35.36.b | सविता ते शरिरेभ्य : पृथिव्याँ ल्लोकमिच्छतु । |
| 35.36.c | तस्मै युज्यन्तामुस्रिया : ।।२।। |
| 35.37.a | वायु : पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा । |
| 35.37.b | वि मुच्यन्तामुस्रिया : ।।३।। |
| 35.38.a | अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । |
| 35.38.b | गोभाज इत्किलासथ यत्सनवथ पूरुषम् ।।४।। |

परि । द्यावापृथिवी इति द्यावापृथिवी । सद्य : । इत्वा । परि । लोकान् । परि । दिश : । परि । स्व रिति स्व : *। ऋतस्य । तन्तुम् । विततं मिति वि = ततम् । विचृत्येति वि = चृत्य । तत् । अपश्यत् । तत् । अभवत् । तत् । आसीत् *।।९।। सदस : । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् *। सनिम् । मेधाम् । अयासिषम् । स्वाहा *।।१०।। याम् । मेधाम् । देवगणा इति देव = गणा : । पितर : । च । उपासत इत्युप = आसते *। तया । माम् । अद्य । मेधया । अग्ने । मेधाविनम् । कुरु । स्वाहा *।।११।। इदम् । मे । ब्रह्म । च । क्षत्रम् । च । उभे इत्युभे । श्रियम् । अश्नुताम् *। मयि । देवा : । दधतु । श्रियम् । उत्तमा मित्युत् = तमाम् । तस्यै । ते । स्वाहा *।।१२।।३।।२१५-१६=१९९।।

अप । इत : । यन्तु । पणय : । असुम्ना : । देवपीयव इति देव = पीयव : *। अस्य । लोक : ।( सुतावत : । सुतवत इति सुत = वत : )*।।१।। द्युभि रिति द्यु = भि : । अहोभि रित्यह : = भि : । अक्तुभि रित्यक्तु = भि : । व्यक्त मिति वि = अक्तम् । यम : । ददातु । अवसानमित्यव = सानम् । अस्मै *। सविता । ते । शरीरेभ्य : । पृथिव्याम् । लोकम् । इच्छतु *। तस्मै । युज्यन्ताम् । उस्रिया : *।।२।। वायु : । पुनातु । सविता । पुनातु । अग्ने : । भ्राजसा । सूर्यस्य । वर्चसा *। वि । मुच्यन्ताम् । उस्रिया : *।।३।। अश्वत्थे । व : । (निषदनम् । निसदन मिति नि = सदनम् ) । पर्णे । व : । वसति : । कृता *। गोभाज इति गो = भाज : । इत् । किल । असथ । यत् । सनवथ । (पूरुषम् । पुरुष मिति पुरुषम् )*।।४।।

| | |
|---|---|
| 35.39.a | सविता ते शरीराणि मातुरुपस्थ आ वपतु । |
| 35.39.b | तस्मै पृथिवि शं भव । |
| 35.39.c | प्रजापतौ त्वा देवतायामुपोदके लोके नि दधाम्यसौ ॥५॥ |
| 35.40.a | परम् मृत्यो अनु परेहि पन्थाँ य्यस्ते अन्य इतरो देवयानात् । |
| 35.40.b | चक्षुष्मते श्रृण्वते ते ब्रवीमि मा न : प्रजाꣳ रीरिषो मोत वीरान् ॥६॥ |
| 35.41.a | शँ वात : शꣳ हि ते घृणि : शं ते भवन्त्विष्टका : । |
| 35.41.b | शं ते भवन्त्वग्नय : पार्थिवासो मा त्वाऽभि शूशुचन् ॥७॥ |
| 35.42.a | कल्पन्तां ते दिशस्तुभ्यमाप : शिवतमास्तुभ्यम् भवन्तु सिन्धव : । |
| 35.42.b | अन्तरिक्षꣳ शिवं तुभ्यं कल्पन्तां ते दिश : सर्वा : ॥८॥ |
| 35.43.a | अश्मन्वती रीयते सꣳ रभध्वमुत्तिष्ठत प्र तरता सखाय : । |
| 35.43.b | अत्रा जहीमोऽशिवा ये असञ्छिवान्वयमुत्तरेमाभि वाजान् ॥९॥ |
| 35.44.a | अपाघमप किल्बिषमप कृत्यामपो रप : । |
| 35.44.b | अपामार्ग त्वमस्मदप दु : ष्वप्न्यꣳ सुव ॥१०॥ |
| 35.45.a | सुमित्रिया न आप ओषधय : सन्तु दुर्मित्रियास्तस्मै सन्तु । |
| 35.45.b | योऽस्मान् द्वेष्टि यं च वयं द्विष्म : ॥११॥ |
| 35.46.a | अनड्वाहमन्वारभामहे स्वस्तये । |
| 35.46.b | स न इन्द्र इव देवेभ्यो वह्नि : सन्तारणो भव ॥१२॥ |

सविता । ते । शरीराणि । मातु : । उपस्थ इत्युप = स्थे । आ । वपतु *। तस्मै । पृथिवि । शम् । भव *। प्रजापता इति प्रजा = पतौ । त्वा । देवतायाम् । उपोदक इत्युप = उदके । लोके । नि । दधामि । असौ *।।५।। परम् । मृत्यो इति मृत्यो । अनु । परा । इहि । पन्थाम् । य : । ते । अन्य : । इतर : । देवयानादिति देव = यानात् *। चक्षुष्मते । शृण्वते । ते । ब्रवीमि । मा । न : । प्रजामिति प्र -जाम् ।( रीरिष : । रिरिष इति रिरिष : )। मा । उत । वीरान् *।।६।। शम् । वात : । शम् । हि । ते । घृणि : । शम् । ते । भवन्तु । इष्टका : *। शम् । ते । भवन्तु । अग्नय : । पार्थिवास : । मा । त्वा । अभि । शूशुचन् *।।७।। कल्पन्ताम् । ते । दिश : । तुभ्यम् । आप : । शिवतमा इति शिव = तमा : । तुभ्यम् । भवन्तु । सिन्धव : *। अन्तरिक्षम् । शिवम् । तुभ्यम् । कल्पन्ताम् । ते । दिश : । सर्वा : *।।८।। अश्मन्वतीत्यश्मन् = वती । रीयते । सम् । रभध्वम् । उत् । तिष्ठत । प्र । तरत । सखाय : *। अत्र । जहीम : । अशिवा :। ये । असन् । शिवान् । वयम्। उत्। तरेम । अभि । वाजान् *।।९।। अप । अघम् । अप । किल्बिषम् । अप । कृत्याम् । अपो इत्यपो । रप : *। (अपामार्ग । अपमार्गेत्यप = मार्ग)। त्वम् । अस्मत् । अप ।( दु : ष्वप्न्यम् । दुस्स्वप्न्य मिति दु : = स्वप्न्यम्)। सुव *।।१०।। सुमित्रिया इति सु = मित्रिया : । न : । आप : । ओषधय : । सन्तु । दुर्मित्रिया इति दु : = मित्रिया : । तस्मै । सन्तु । य : । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्म : *।।११।। अनड्वाहम् । अन्वारभामह इत्यनु = आरभामहे । स्वस्तये *। स :। न : । इन्द्र इवेतीन्द्र : = इव । देवेभ्य :। वन्हि :। सन्तारण इति सं = तारण : । भव *।।१२।।

| | |
|---|---|
| 35.47.a | उद्वयं तमसस्परि स्व : पश्यन्त उत्तरम् । |
| 35.47.b | देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।।१३।। |
| 35.48.a | अग्न आयूꣳषि पवस आसुवोर्जमिषं च न : । |
| 35.48.b | आरे बाधस्व दुच्छुनाम् ।।१४।। |
| 35.49.a | आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि । |
| 35.49.b | घृतं पीत्वामधु चारु गव्यम् पितेव पुत्रमभि रक्षतादिमान्त्स्वाहा ।।१५।। |
| 35.50.a | इमं जीवेभ्य : परिधिं न्दधामि मैषां नु गादपरो अर्थमेतम् । |
| 35.50.b | शतं जीवन्तु शरद : पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ।।१६।। |
| 35.51.a | परीमे गामनेषत पर्यग्निमहृषत । |
| 35.51.b | देवेष्वक्रत श्रव : क इमाँ (२) - आ दधर्षति ।।१७।। |
| 35.52.a | क्रव्यादमग्निम् प्र हिणोमि दूरँ य्यमराज्यङ् गच्छतु रिप्रवाह : । |
| 35.52.b | इहैवायमितरो जातवेदा देवेभ्यो हव्यँ वहतु प्रजानन् ।।१८।। |
| 35.53.a | वह वपां जातवेद : पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके । |
| 35.53.b | मेदस : कुल्या उप तान्त्स्रवन्तु सत्या एषामाशिष : सन्तु कामा : स्वाहा ।।१९।। |

उत् । वयम् । तमस : । परि । स्वरिति स्व : । पश्यन्त : । उत्तर मित्युत् = तरम् ✱। देवम् । देवत्रेति देव = त्रा । सूर्यम् । अगन्म । ज्योति : । उत्तममित्युत् = तमम् ✱ ॥१३॥ अग्ने । आयूꣳषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । न : ✱। आरे । बाधस्व । दुच्छुनाम् ✱॥१४॥ आयुष्मान् । अग्ने । हविषा । वृधान : । घृतप्रतीक इति घृत = प्रतीक : । घृतयोनि रिति घृत = योनि : । एधि ✱। घृतम् । पीत्वा । मधु । चारु । गव्यम् । पितेवेति पिता = इव । पुत्रम् । अभि । रक्षतात् । इमान् । स्वाहा ✱॥१५॥ इमम् । जीवेभ्य : । परिधिमिति परि = धिम् । दधामि । मा । एषाम् । नु । गात् । अपर : । अर्थम् । एतम् ✱। शतम् । जीवन्तु । शरद : । पुरूची : । अन्त : । मृत्युम् । दधताम् । पर्वतेन ✱॥१६॥ परि । इमे । गाम् । अनेषत । परि । अग्निम् । अहृषत ✱। देवेषु । अक्रत । श्रव : । क : । इमान् । आ । दधर्षति ✱॥१७॥ क्रव्याद मिति क्रव्य = अदम् । अग्निम् । प्र । हिनोमि । दूरम् । यमराज्य मिति यम = राज्यम् । गच्छतु । रिप्रवाह इति रिप्र = वाह : ✱। इह । एव । अयम् । इतर : । जातवेदा इति जात = वेदा : । देवेभ्य : । हव्यम् । वहतु । प्रजानन्निति प्र = जानन् ✱॥१८॥ वह । वपाम् । जातवेद इति जात = वेद : । पितृभ्य इति पितृ = भ्य : । यत्र । एनान् । वेत्थ । निहिता निति नि = हितान् । पराके ✱। मेदस : । कुल्या : । उप । तान् । स्रवन्तु । सत्या : । एषाम् । आशिष इत्या = शिष : । सन्तु । कामा : । स्वाहा ✱॥१९॥

| | |
|---|---|
| 35.54.a | स्योना पृथिवि नो भवानृक्षरा निवेशनी । |
| 35.54.b | यच्छा न : शर्म सप्रथा : । |
| 35.54.c | अप न : शोशुचदघम् ॥२०॥ |
| 35.55.a | अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुन : । |
| 35.55.b | असौ स्वर्गाय लोकाय स्वाहा । |
| 35.55.c | अप न : शोशुचदघम् ॥२१॥(४) |

सहस्रशीर्षा षोळश ॥१६॥ अद्भ्य : संभृत : षट् ॥६॥ तदेवाग्निर्द्वादश ॥१२॥ अपेतो यन्त्वेकविंशति : ॥२१॥ चतुरनुवाकेषु पञ्चपञ्चाशत् ॥५५॥

## ॥ इति शुक्लयजु : काण्वसंहितायां पञ्चत्रिंशोऽध्याय : ॥३५॥

स्योना । पृथिवि । नः । भव । अनृक्षरा । निवेशनीति नि = वेशनी *। यच्छ । नः । शर्म । सप्रथा इति स = प्रथाः *। अप । नः । शोशुचत् । अघम् *।।२०।। अस्मात् । त्वम् । अधि । जातः । असि । त्वत् । अयम् । जायताम् । पुन रिति पुनः *। असौ । स्वर्गायेति स्वः = गाय । लोकाय । स्वाहा *। अप । नः । शोशुचत् । अघम् *।।२१।।४।।३३०-५८=२७२।। आहत्य पद संख्या ।।८८२-७६=८०६।।

## इति पञ्चत्रिंशोऽध्यायः

## || इति पञ्चत्रिंशोऽध्याय : ||

| Adhyaya | 35 | | |
|---|---|---|---|
| **Anuvaka No.** | **Total Padas** | **Galitha Padas** | **Suddha Padas** |
| 1 | 232 | 2 | 230 |
| 2 | 105 | 0 | 105 |
| 3 | 215 | 16 | 199 |
| 4 | 330 | 58 | 272 |
| **Total** | **882** | **76** | **806** |

# अथ षट् त्रिंशोऽध्याय :

| | |
|---|---|
| 36.1.a | ऋचँ वाचं प्र पद्ये मनो यजु : प्र पद्ये साम प्राणं प्र पद्ये चक्षु : श्रोत्रं प्र पद्ये । |
| 36.1. b | वागोज स्सहौजो मयि प्राणापानौ ॥१॥ |
| 36.2.a | यन्मे च्छिद्रं चक्षुषो हृदयस्य मनसो वाऽतितृण्णं बृहस्पतिर्मे तद्दधातु । |
| 36.2.b | शन्नो भवतु भुवनस्य यस्पति : ॥२॥ |
| 36.3.a | भूर्भुव : स्व : । तत् सवितुवरिण्यं भर्गो देवस्य धीमहि । |
| 36.3.b | धियो यो न : प्रचोदयात् ॥३॥ |
| 36.4.a | कया नश्चित्र आ भुवदूती सदावृध : सखा । |
| 36.4.b | कया श्चिष्ठया वृता ॥४॥ |
| 36.5.a | कस्त्वा सत्यो मदानां मँहिष्ठो मत्सदन्धस : । |
| 36.5.b | दृळ्हा चिदारुजे वसु ॥५॥ |
| 36.6.a | अभी षु ण : सखीनामविता जरितॄणाम् । |
| 36.6.b | शतं भवास्यूतिभि : ॥६॥ |
| 36.7.a | कया त्वन्न ऊत्याऽभि प्र मन्दसे वृषन् । |
| 36.7.b | कया स्तोतृभ्य आ भर ॥७॥ |
| 36.8.a | इन्द्रो विश्वस्य राजति । |

# अथ षट्त्रिंशोऽध्याय :

ॐ ऋचम् । वाचम् । प्र । पद्ये । मन : । यजु : । प्र । पद्ये । साम । प्राणम् । प्र । पद्ये । चक्षु : । श्रोत्रम् । प्र । पद्ये । वाक् । ओज : । सह । ओज : । मयि । प्राणापानौ *।।१।। यत् । मे । छिद्रम् । चक्षुष : । हृदयस्य । मनस : । वा । अतितृण्ण मित्यति = तृण्णं । बृहस्पति : । मे । तत् । दधातु *। शम् । न : । भवतु । भुवनस्य । य : । पति : *।।२।। भू : । भुव : । स्व रिति स्व : । तत् । सवितु : । वरेण्यम् । भर्ग : । देवस्य । धीमहि *। धिय : । य : । न : । प्रचोदया दिति प्र = चोदयात् *।।३।। कया । न : । चित्र : । आ । भुवत् । ऊती । सदावृध इति सदा = वृध : । सखा *। कया । शचिष्ठया । वृता *।।४।। क : । त्वा । सत्य : । मदानाम् । मꣳहिष्ठ : । मत्सत् । अन्धस : *। दृळ्हा । चित् । आरुजे । वसु *।।५।। अभि । सु । न : । सखीनाम् । अविता । जरितॄणाम् *। शतम् । भवासि । ऊतिभि रित्यूति = भि : ।।६।। कया । त्वम् । न : । ऊत्या । अभि । प्र । मन्दसे । वृषन् *। कया । स्तोतृभ्य इति स्तोतृ = भ्य : । आ । भर *।।७।। इन्द्र : । विश्वस्य । राजति *।।

| | |
|---|---|
| 36.8.b | शन्नो अस्तु द्विपदे शं चतुष्पदे ॥८॥ |
| 36.9.a | शन्नो मित्र : शँ वरुण : शन्नो भवत्वर्यमा । |
| 36.9.b | शन्न इन्द्रो बृहस्पति : शन्नो विष्णुरुरुक्रम : ॥९॥ |
| 36.10.a | शन्नो वात : पवता१ँ शन्नस्तपतु सूर्य : । |
| 36.10.b | शन्न : कनिक्रदद् देव : पर्जन्यो अभि वर्षतु ॥१०॥ |
| 36.11.a | अहानि शं भवन्तु न : श१ँ रात्रि : प्रति धीयताम् । |
| 36.11.b | शन्न इन्द्राग्नी भवता मवोभि : शन्न इन्द्रावरुणा रातहव्या । |
| 36.11.c | शन्न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शँ य्यो : ॥११॥ |
| 36.12.a | शन्नो देवी रभिष्टय आपो भवन्तु पीतये । |
| 36.12.b | शँ य्योरभि स्रवन्तु न : ॥१२॥ |
| 36.13.a | स्योना पृथिवि नो भवानृक्षरा निवेशनी । |
| 36.13.b | यच्छा न : शर्म सप्रथा : ॥१३॥ |
| 36.14.a | आपो हि ष्ठा मयोभुव स्ता न ऊर्जे दधातन । |
| 36.14.b | महे रणाय चक्षसे ॥१४॥ |
| 36.15.a | यो व : शिवतमो रसस्तस्य भाजयतेह न : । |
| 36.15.b | उशतीरिव मातर : ॥१५॥ |
| 36.16.a | तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । |

शम् । न : । अस्तु । द्विपद इति द्वि = पदे । शम् । (चतुष्पदे । चतु : पद इति चतु : = पदे )*।।८।। शम् । न : । मित्र : । शम् । वरुण : । शम् । न : । भवतु । अर्यमा *। शम् । न : । इन्द्र : । बृहस्पतिः । शम् । न : । विष्णु : । उरुक्रम इत्युरु = क्रम : *।।९।। शम् । न : । वात : । पवताम् । शम् । न : । तपतु । सूर्य : *। शम् । न : । कनिक्रदत् । देव : । पर्जन्य : । अभि । वर्षतु *।।१०।। अहानि । शम् । भवन्तु । न : । शम् । रात्रि : । प्रति । धीयताम् *। शम् । न : । इन्द्राग्नी इतीन्द्राग्नी । भवताम् । अवोभि रित्यव : = भि : । शम् । न : । इन्द्रावरुणा । रातहव्येति रात = हव्या *। शम् । न : । इन्द्रापूषणा । वाजसाता इति वाज = सातौ । शम् । इन्द्रासोमा । सुविताय । शम् । यो : *।।११।। शम् । न : । देवी : । अभिष्टये । आप : । भवन्तु । पीतये *। शम् । यो : । अभि । स्रवन्तु । न : *।।१२।। स्योना । पृथिवि । न : । भव । अनृक्षरा । निवेशनीति नि = वेशनी *। यच्छ । न : । शर्म । सप्रथा इति स = प्रथा : *।।१३।। आप : । हि । स्थ । मयोभुव इति मय : = भुव : । ता : । न : । ऊर्जे । दधातन *। महे । रणाय । चक्षसे * ।।१४।। य : । व : । शिवतम इति शिव = तम : । रस : । तस्य । भाजयत । इह । न : *। उशती रिवेत्युशती : = इव । मातर : *।।१५।। तस्मै । अरम् । गमाम । व : । यस्य । क्षयाय । जिन्वथ *।

| | |
|---|---|
| 36.16.b | आपो जनयथा च न : ।।१६।। |
| 36.17.a | द्यौ : शान्तिरन्तरिक्षꣳ शान्ति : पृथिवी शान्तिराप : शान्तिरोषधय : शान्ति : । |
| 36.17.b | वनस्पतय : शान्ति : शान्तिरेव शान्ति : ।।१७।। |
| 36.18.a | धृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् । |
| 36.18.b | मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । |
| 36.18.c | मित्रस्य चक्षुषा समीक्षामहे ।।१८।। |
| 36.19.a | धृते दृꣳह मा । |
| 36.19.b | ज्योक्ते सन्दृशि जीव्यासं ज्योक्ते सन्दृशि जीव्यासम् ।।१९।। |
| 36.20.a | नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । |
| 36.20.b | अन्याꣳस्ते अस्मत्तपन्तु हेतय : पावको अस्मभ्यꣳ शिवो भव ।।२०।। |
| 36.21.a | नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे । |
| 36.21.b | नमस्ते भगवन्नस्तु यत : स्व : समीहसे ।।२१।। |
| 36.22.a | यतोयत : समीहसे ततो नो अभयं कुरु । |
| 36.22.b | शन्न : कुरु प्रजाभ्योऽभयन्न : पशुभ्य : ।।२२।। |
| 36.23.a | सुमित्रिया न आप ओषधय : सन्तु दुर्मित्रियास्तस्मै सन्तु । |
| 36.23.b | योऽस्मान् द्वेष्टि यं च वयं द्विष्म : ।।२३।। |

आपः । जनयथ । च । नः ॥१६॥ द्यौः । शान्तिः । अन्तरिक्षम् । शान्तिः । पृथिवी । शान्तिः । आपः । शान्तिः । ओषधयः । शान्तिः । वनस्पतयः । शान्तिः । शान्तिः । एव । शान्तिः ॥१७॥ धृते । दृꣳह । मा । मित्रस्य । मा । चक्षुषा । सर्वाणि । भूतानि । सम् । ईक्षन्ताम् । मित्रस्य । अहम् । चक्षुषा । सर्वाणि । भूतानि । सम् । ईक्षे । मित्रस्य । चक्षुषा । सम् । ईक्षामहे ॥१८॥ धृते । दृꣳह । मा । ज्योक् । ते । सन्दृशीति सं = दृशि । जीव्यासम् । ज्योक् । ते । सन्दृशीति सं = दृशि । जीव्यासम् ॥१९॥ नमः । ते । हरसे । शोचिषे । नमः । ते । अस्तु । अर्चिषे । अन्यान् । ते । अस्मत् । तपन्तु । हेतयः । पावकः । अस्मभ्यम् । शिवः । भव ॥२०॥ नमः । ते । अस्तु । विद्युत इति वि = द्युते । नमः । ते । स्तनयित्नवे । नमः । ते । भगवन्निति भग = वन् । अस्तु । यतः । स्वरिति स्वः । समीहस इति सं = ईहसे ॥२१॥ यतः । यतः । समीहस इति सं = ईहसे । ततः । नः । अभयम् । कुरु । शम् । नः । कुरु । प्रजाभ्य इति प्र = जाभ्यः । अभयम् । नः । पशुभ्य इति पशु = भ्यः ॥२२॥ सुमित्रिया इति सु = मित्रिया । नः । आपः । ओषधयः । सन्तु । दुर्मित्रिया इति दुः = मित्रिया । तस्मै । सन्तु । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः ॥२३॥

| | |
|---|---|
| 36.24.a | तच्चक्षुर्देवहितं पुरस्ताच्छुक्र मुच्चरत् । |
| 36.24.b | पश्येम शरद : शतं जीवेम शरद : शत१ँ शृणुयाम शरद : शतम् ॥२४॥(१) |

ऋचँ वाचमित्येकानुवाके चतुर्विंशति : ॥२४॥

**॥ इति शुक्लयजु : काण्वसंहितायां षट् त्रिंशोऽध्याय : ॥३६॥**

तत् । चक्षु : । देवहित मिति देव = हितम् । पुरस्तात् । शुक्रम् । उच्चर दित्युत् = चरत् *। पश्येम । शरद : । शतम् । जीवेम । शरद : । शतम् । शृणुयाम । शरद : । शतम् *।।२४।।१।।३३९-१६२=१७७।। आहत्य पद संख्या ।।३३९-१६२=१७७।।

## इति षट्त्रिंशोऽध्याय :

## ।। इति षट्त्रिंशोऽध्याय : ।।

| Adhyaya | 36 | | |
|---|---|---|---|
| **Anuvaka No.** | **Total Padas** | **Galitha Padas** | **Suddha Padas** |
| 1 | 339 | 162 | 177 |
| **Total** | **339** | **162** | **177** |

# ।। अथ सप्तत्रिंशोऽध्याय : ।।

| | |
|---|---|
| 37.1.a | देवस्य त्वा सवितु : प्रसवेऽश्विनोर्बाहुभ्याम् पूष्णो हस्ताभ्याम् । |
| 37.1.b | आ ददे नारिरसि ।।१।। |
| 37.2.a | युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चित : । |
| 37.2.b | वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितु : परिष्टुति :।।२।। |
| 37.3.a | देवी द्यावापृथिवी मखस्य वामद्य शिरो राध्यासं देवयजने पृथिव्या : । |
| 37.3.b | मखाय त्वा मखस्य त्वा शीर्ष्णे ।।३।। |
| 37.4.a | देव्यो वम्रियो भूतस्य प्रथमजा मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्या : । |
| 37.4.b | मखाय त्वा मखस्य त्वा शीर्ष्णे ।।४।। |
| 37.5.a | इयत्यग्र आसीर्मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्या : । |
| 37.5.b | मखाय त्वा मखस्य त्वा शीर्ष्णे ।।५।। |
| 37.6.a | इन्द्रस्यौज : स्थ मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्या : । |
| 37.6.b,c | मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.6.d | मखाय त्वा मखस्य त्वा शीर्ष्णे ।।६।। |
| 37.7.a | प्रैतु ब्रह्मणस्पति : प्र देव्येतु सूनृता । |
| 37.7.b | अच्छा वीरं नर्यम् पङ्क्तिराधसं देवा यज्ञं नयन्तु न : । |

# अथ सप्तत्रिंशोऽध्याय :

ॐ देवस्य । त्वा । सवितु : । प्रसव इति प्र = सवे । अश्विनो : । बाहुभ्या मिति बाहु = भ्याम् । पूष्ण : । हस्ताभ्याम् । आ । ददे । नारि : । असि ।।१।। युञ्जते । मन : । उत । युञ्जते । धिय : । विप्रा : । विप्रस्य । बृहत : । विपश्चित इति विप : = चित : *। वि । होत्रा : । दधे । (वयुनावित् । वयुनविदिति वयुन = वित् )। एक : । इत् । मही । देवस्य । सवितु : । (परिष्टुति : । परिस्तुति रिति परि = स्तुति : )*।।२।। देवी इति देवी । द्यावापृथिवी इति द्यावापृथिवी । मखस्य । वाम् । अद्य । शिर : । राध्यासम् । देवयजन इति देव = यजने । पृथिव्या : । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।।३।। देव्य : । वम्रिय : । भूतस्य । प्रथमजा इति प्रथम = जा : । मखस्य । व : । अद्य । शिर : । राध्यासम् । देवयजन इति देव = यजने । पृथिव्या : । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।।४।। इयति । अग्रे । आसी : । मखस्य । ते । अद्य । शिर : । राध्यासम् । देवयजन इति देव = यजने । पृथिव्या : । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।।५।। इन्द्रस्य । ओज : । स्थ । मखस्य । व : *। अद्य । शिर : । राध्यासम् । देवयजन इति देव = यजने । पृथिव्या : । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।।६।। प्र । एतु । ब्रह्मण : । पतिः । प्र । देवी । एतु । सूनृता *। अच्छ । वीरम् । नर्यम् । पङ्क्तिराधस मिति पङ्क्ति = राधसम् । देवा : । यज्ञम् । नयन्तु । न : *।

| | |
|---|---|
| 37.7.c,d | मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.7.e | मखाय त्वा मखस्य त्वा शीर्ष्णे ॥७॥ |
| 37.8.a,b | मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.8.c,d | मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.8.e,f | मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.8.g | मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे ॥८॥ |
| 37.9.a | अश्वस्य त्वा वृष्ण : शक्ना धूपयामि देवयजने पृथिव्या : । |
| 37.9.b | मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.9.c | अश्वस्य त्वा वृष्ण : शक्ना धूपयामि देवयजने पृथिव्या : । |
| 37.9.d | मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.9.e | अश्वस्य त्वा वृष्ण : शक्ना धूपयामि देवयजने पृथिव्या : । |
| 37.9.f | मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.9.g | मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे ॥९॥ |
| 37.10.a | ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा । |
| 37.10.b | मखाय त्वा मखस्य त्वा शीर्ष्णे । |

मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।।७।। मखस्य । शिर : । असि । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखस्य । शिरः । असि । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखस्य । शिरः । असि । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।।८।। अश्वस्य । त्वा । वृष्ण : । शक्ना । धूपयामि । देवयजन इति देव = यजने । पृथिव्या : । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । अश्वस्य । त्वा । वृष्ण : । शक्ना । धूपयामि । देवयजन इति देव = यजने । पृथिव्या : । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । अश्वस्य । त्वा । वृष्ण : । शक्ना । धूपयामि । देवयजन इति देव = यजने । पृथिव्या : । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।।९।। ऋजवे । त्वा । साधवे । त्वा । सुक्षित्या इति सु = क्षित्यै । त्वा *। मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।

| | |
|---|---|
| 37.10.c | मखाय त्वा मखस्य त्वा शीर्ष्णे । |
| 37.10.d | मखाय त्वा मखस्य त्वा शीर्ष्णे ।।१०।।(१) |

| | |
|---|---|
| 37.11.a | यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे । |
| 37.11.b | देवस्त्वा सविता मध्वाऽनक्तु पृथिव्या : सꣳ स्पृशस्पाहि । |
| 37.11.c | अर्च्चिरसि शोचिरसि तपोऽसि ।।१।। |
| 37.12.a | अनाधृष्टा पुरस्तादग्नेराधिपत्य आयुर्मे दा : पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दा : । |
| 37.12.b | सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्मे दा आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषम् मे दा : । |
| 37.12.c | विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्य ओजो मे दा विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि मनोरश्वाऽसि ।।२।। |
| 37.13.a | स्वाहा मरुद्भि : परि श्रीयस्व दिव : सꣳस्पृशस्पाहि । |
| 37.13.b | मधु मधु मधु ।।३।।(२) |

| | |
|---|---|
| 37.14.a | गर्भो देवानाम् पिता मतीनां पति : प्रजानाम् । |
| 37.14.b | सं देवो देवेन सवित्रा गत सꣳ सूर्येण रोचते ।।१।। |
| 37.15.a | समग्निरग्निना गत सं दैवेन सवित्रा सꣳ सूर्येणारोचिष्ट । |

मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे । मखाय । त्वा । मखस्य । त्वा । शीर्ष्णे ।।१०।।१।।२४३-१६९=७४।।

यमाय । त्वा । मखाय । त्वा । सूर्यस्य । त्वा । तपसे । देव : । त्वा । सविता । मध्वा । अनक्तु । पृथिव्या : । सꣳस्पृश इति सं = स्पृश : । पाहि । अर्चि : । असि । शोचि : । असि । तप : । असि ।।१।। अनाधृष्टा । पुरस्तात् । अग्ने : । आधिपत्य इत्याधि = पत्ये । आयु : । मे । दा : । पुत्रवतीति पुत्र = वती । दक्षिणत : । इन्द्रस्य । आधिपत्य इत्याधि = पत्ये । प्रजामिति प्र = जाम् । मे । दा : । (सुषदा । सुसदेति सु = सदा )। पश्चात् । देवस्य । सवितु : । आधिपत्य इत्याधि = पत्ये । चक्षु : । मे । दा : । आश्रुति रित्या = श्रुति : । उत्तरत : । धातु : । आधिपत्य इत्याधि = पत्ये । राय : । पोषम् । मे । दा : । विधृति रिति वि = धृति : । उपरिष्टात् । बृहस्पते : । आधिपत्य इत्याधि = पत्ये । ओज : । मे । दा : । विश्वाभ्य : । मा । नाष्ट्राभ्य : । पाहि । मनो : । अश्वा । असि ।।२।। स्वाहा । मरुद्भि रिति मरुत् = भि : । परि । श्रीयस्व । दिव : । सꣳस्पृश इति सं = स्पृश : । पाहि । मधु । मधु *। मधु ।।३।।२।।७५-५=७०।।

गर्भ : । देवानाम् । पिता । मतीनाम् । पति : । प्रजाना मिति प्र = जानाम् *। सम् । देव : । देवेन । सवित्रा । गत । सम् । सूर्येण । रोचते *।।१।। सम् । अग्नि : । अग्निना । गत । सम् । दैवेन । सवित्रा । सम् । सूर्येण । अरोचिष्ट *।

